BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

[PA]NDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.

AND

G. THIBAUT PH. DR.

*No. 42.*

# [या]ज्ञवल्क्यादिमहर्षिप्रणीतः शिक्षासङ्ग्रहः ।

क्वचिद्व्याख्यानयुतः ।

[श्र]ीमत्काशिकप्रधानपाठालयाधीतविद्येन श्रीमन्मिथिलामण्डलाधीशतो लब्धवै-
दुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनसंस्थापितवेदविद्यालयाध्यापके-
न च पाठकोपाह्वश्रीमद्युगलकिशोरव्यासेन निर्म्मितशिक्षाकीर्त्ति-
प्रकाशाख्यटिप्पण्या समेतः शोधितः प्रकाशितश्च ।

# A COLLECTION OF ŚIKSHÁS BY YÁJÑAVALKYA AND OTHERS,

WITH COMMENTARIES ON SOME OF THEM.

[E]DITED AND ANNOTATED BY PANDIT YUGALAKIŚORA VYÁSA

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

Fasciculus III.

*BENARES:*

PUBLISHED BY MESSRS. BRAJ B. DAS & CO.

PRINTED AT THE BENARES PRINTING PRESS.

1891.

म् ॥ ३१८ ॥ एवं त्रीणि वा चत्वारि पदानि उच्चार्य पुनः सुपदेनान्त्यमुच्चारणीयं स्यात् । अभीषुणः । सुनः । नः । सखीनाम् ॥ पूर्व्वस्योत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य ॥ ३१९ ॥ उत्तरेण संहितस्यावग्रहवतः पूर्वपदस्य स्थितोपस्थितं कर्त्तव्यम् । त्वा समिद्भिः । समिद्भिरङ्गिरः । इति पूर्वमुच्चार्य । समिद्भिरिति समित् । भिः । इति पठनीयं पूर्वस्योत्तरसंहितस्येत्य"वसाने चेति" यावदनुवर्त्तते ॥ अन्तःपददीर्घीभावे ॥ मामहन्तामदितिः । ममहन्तामिति ममहन्ताम् । आयुनगिन्द्रः । अयुनगित्ययुनक् ॥ विनामे ॥ ३२० ॥ सुषाव । सोमम् । सुसावेति सुसाव ॥ प्रगृह्ये ॥ ३२१ ॥ इन्द्रवायूऽइमे । इन्द्रवायूऽइतीन्द्र । वायू । विष्णवेते । विष्णोऽइति । उदुत्यम् । ऊँऽइत्यूँ । मोषुणः । मोऽइति मो । सुनः । ऊर्द्ध्वऽऊषुणः । ऊँऽइत्यूँ । सुनः ॥ रिफितेऽनिरुक्ते ॥ ३२२ ॥ अन्तस्ते । अन्तरित्यन्तः । प्रातः सोमम् । प्रातरिति प्रातः ॥ अवसाने च ॥ ३२३ ॥ अर्द्धर्चादेः समाप्तौ विद्यमानस्य स्थितोपस्थितं स्यात् । पशून्पाहि । पाहीति पाहि । हव्यं ठं० रक्ष । रक्षेति रक्ष ॥ भुवनमाविवेशा ३ । आविवेशा ३ ॥ विवेशा३इति विवेशा३ । अत्र "प्लुतमिता"विति प्रकृतिभावः ॥ यथा समाम्नातङ्क्रमावसान-

वैश्वानरं नकारः स्वरे परे न यकारमापद्यते सङ्-क्रमे चेत् । रक्षोहणो व इति यजुषि वैश्वानरव । अत्र नयामि । अत्र चाकारोपधत्त्वात् यकारः प्राप्तः ॥ सङ्क्रमे च सर्वत्र ॥ ३१३ ॥ यजुःषु ऋक्षु च ए-दोद्भ्यां परोऽकारः पूर्वमापद्यते । प्राणश्च मइति यजुषि प्राणोऽपानः । यद्ग्रामे इति मन्त्रे शूद्रेऽर्य्ये । कन्याऽइवेति ऋचि यज्ञोऽभि इत्यादि भवति । अ-ष्टक्रमऽर्जं किम् । उदुत्त्या । ऊर्जमावद । अत्र पदद्व-येन विरामः । एतद्विषयक्रमलक्षणमाह ॥ अष्टक-मध्यानि त्रीणि स त्रिक्रमः ॥ ३१४ ॥ पूर्वस्मात्प-दादष्टकं मध्ये उच्चार्य्य तदुत्तरे विरामः । एवं त्री-णि संहितया उच्चारयति स त्रिक्रमः स्यात् । उदुत्य-म् । सोमेनातनच्चभि ॥ पुनराकारेणोत्तरम् ॥ ३१५ ॥ एवं त्रीणि पदान्युच्चार्य पुनराकारेण सहितं तृतीय-पदमुच्चारणीयं स्यात् । ऊर्जमावद । आवद । वद त्व-या ॥ मोषूणा भीषुणो च ॥ ३१६ ॥ मो षूणः । अभी-षुणः । इमौ च त्रिक्रमौ स्याताम् ॥ चत्त्वार्य्यष्टकपू-र्व्वे नकारपरे सौ ॥ ३१७ ॥ अष्टकपूर्वे नकारपरे सुइतिपदे सति चत्वारि संहितया उच्चारयितव्यानि स चतुष्क्रमइतिशेषः । ऊर्ध्वऽऊषुणः । एताद्दशा-सऽऊषुणः । गोमदूषुणासत्या ॥ पुनः सुपदेनोत्तर-

मन्त्रे च मे इत्यनयोः सङ्क्रमेऽपि स्वरिति स्वः । च
मे इत्यत्र रिफितत्वज्ञापनार्थं न सङ्क्रमः ॥ उदस्वर्ग-
श्च ॥ ३०६ ॥ पूर्वोक्तस्य परित्यागोऽपि क्वचित्स्यात् ।
व्यवस्थितविषयोऽयम् । च शब्दोऽप्यर्थे । "द्विपदैकपदा
नीत्यनेनोक्तः सङ्क्रमः । तदेवाग्निरिति मन्त्रे न भव-
ति ।" संहितायां चेत्यनेन विहितः सङ्क्रमः । लो-
कताऽइन्द्रमित्यत्र न भवति । उक्तञ्च । पुनरुक्तानि
लुप्यन्ते पदानीत्याह शाकलः ॥ अलोप इति गार्ग्य-
स्य काण्वस्यार्थवशादिति ॥ अत्र सम्प्रदायानुसारेण
निर्णयः ॥ इति पदलक्षणम् ॥ अथ क्रमलक्षणम् ।
क्रमः स्मृतिप्रयोजनः ॥ ३१० ॥ संहितायाः पदानां
च स्मृतिः स्मरणं प्रयोजनमस्य सः । संहिताया अवसा-
ननिर्णयश्चेत्यादि । एवं प्रयोजनमुक्त्वा तल्लक्षण-
माह । क्रम इत्यधिकारः । अध्यायपरिसमाप्तिः ॥
द्वे द्वे पदे सन्दध्यात्युत्तरेणोत्तरमावसानादृक्तवर्ज्जम् ॥
३११ ॥ एतदुत्तरमवसानपर्यन्तं द्वे द्वे पदे संहितया
उच्चारयति स क्रमः स्यात् । इषे त्वा । त्वो-
र्ज्जे । एवं पाहीति पर्यन्तं यत्र सङ्क्रमस्तत्र गल-
त्पदानि त्यक्त्वाऽग्रिमैः पदैः सन्धानं कर्त्तव्यम् ।
सङ्क्रमे सन्धिशास्त्रस्याचार्य्येणाभिहितत्वात् । यु-
नक्ति सः । सकस्मै ॥ सङ्क्रमे च वैष्णवान् ॥ ३१२ ॥

त्त्वात् । शिवा चासीत्यस्यानुदात्तत्त्वान्न सङ्क्रमः ॥ अलिङ्गविकारे ॥ ३०४ ॥ लिङ्गभिन्नत्वाभावे सङ्क्रमः स्यात् । भद्रो नऽइति मन्त्रे भद्रशब्दस्य भिन्नलिङ्गत्वान्न सङ्क्रमः । अग्नेर्भागोऽसीत्यनुवाके नपुंसकस्य स्पृतशब्दस्य सङ्क्रमः । व्रातः । स्पृतः । गर्भाः । स्पृताः । दिशः । स्पृताः । इत्येतेषु पुंल्लिङ्गत्वस्त्रीलिङ्गत्वान्न सङ्क्रमः । सम्मे पयाऽसीति मन्त्रे प्रथमस्य समशब्दस्य नपुंसकविषयत्वाद्द्वितीयस्य पुंल्लिङ्गविषयत्वान्न सङ्क्रमः ॥ असमाने ॥ ३०५ ॥ असमाने विषये पुनरावृत्ते सङ्क्रमः स्यात् । आयुर्यज्ञेनेत्यत्रायुरादेर्यज्ञक्लृप्तेरसमानत्वात्सङ्क्रमः । यज्ञस्य तु यज्ञक्लृप्तेः समानविषयत्वान्न सङ्क्रमः ॥ संहितायाञ्च ॥ ३०६ ॥ आर्ष्यां चसंहितायां पुनरावृत्तौ सङ्क्रमः स्यात् । हिरण्यगर्भऽइत्येषः । तस्मन्नुधेत्यादिप्रतीकपठितेषु सङ्क्रमः कार्यः । एषां मन्त्राणां ब्रह्मयज्ञादौ पठनं कार्यमिति केचित् । नेत्यपरे ॥ अवसानार्थम्पुनर्ग्रहणम् ॥ ३०७ ॥ समाप्तिद्योतनार्थं पुनरुच्चारणं स्यात् । आकूत्यै प्रयुजे इतिमन्त्रे द्वितीयादिस्वाहाकारस्य सङ्क्रमे पूष्णेऽग्नये स्वाहेत्यत्र न सङ्क्रमः ॥ अधिकारार्थम् ॥ ३०८ ॥ पदस्याधिककार्यज्ञापनार्थं च पुनरुच्चारणं स्यात् । व्राजश्चेति

प्रमा । प्रतिमा । एकइत्यादिकिम् । पवित्रम् । अ-सि । भूः । असि । शर्म । त्रिरावृत्ते किम् । व्रतम् । कृणुत । व्रतम् । कृणुत । इषे । त्वा । ऊर्जे । त्वा ॥ गूढे ॥ ३०० ॥ द्विरावर्त्तनेऽपि सङ्क्रमः स्या-त् । गूढं नाम द्विवारमुच्चारणीयम् । उभयाभिप्रा-येण मध्ये एकपदं पठ्यते । यन्ताऽसि यमनः । ध्रु-वोऽसि धरुणः । अत्र यन्ता । असि । यमनः । ध्रु-वः । धरुणः । संहितायां द्विरावृत्तस्याप्यसीत्यस्य स-ङ्क्रमो भवति । याः फलिनीरित्यत्र तु याः । च । पुष्पिणीः । अस्य याः शब्दस्य चतुर्वारमुच्चार-णीयस्य त्रिवारमुच्चारणात् । अपुष्पा इत्यनेनापि सम्बन्धं द्योतयितुं न संक्रमः ॥ पदसमूहे ॥ ३०१ ॥ पदानां बहुवारमुच्चारणे सङ्क्रमः स्यात् । वाजश्च मऽइत्यध्याये च मे इतिपदद्वयस्यानुवाकान्तरेऽपि स-ङ्क्रमः ॥ अपराङ्गे ॥ ३०२ ॥ अपरस्याङ्गे अपराङ्ग-त्वेनैव पुनरावृत्ते संङ्क्रमः स्यात् । स्वाहा यज्ञमि-ति मन्त्रे स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा वातादि-त्यनयोः स्वाहाशब्दयोः सङ्क्रमः स्यात् । एमे स्वा-हेत्यस्य न सङ्क्रमः । अपराङ्गत्वाभावात् ॥ अस्वर-विकारे ॥ ३०३ ॥ स्वरभिन्नत्वाभावे सङ्क्रमः स्या-त् । सुक्ष्मा चासि प्रथमस्याप्यसिशब्दस्याद्दा-

ठ्यः । सहृध्यक्तः । करिति कः । "अनुदात्तमित्युक्तत्वात् । कः । खित् । खरिति खः । खभितम् । पदमित्युक्तत्वात्पदावयवे न । राजस्वऽइति राज । स्वः । आवरित्यावः । वरिति वः । "समानश्चेत्युक्तत्वात् । सन्तु । वः । अन्तः श्लेषऽइत्यन्तः । श्लेषः । अत्र पूर्वभागेऽवग्रहः पदान्तवदिति स्थितं प्राप्तं "नत्विति करणमित्युक्तत्वान्न भवति ॥ त्रिपदाद्यावर्त्तमाने सङ्क्रमः ॥ २९६ त्रिपदादीनां पुनरावृत्तौ सत्यां सङ्क्रमः सङ्क्रम्यते इति सङ्क्रमः । आवृत्तानि पदान्यतिक्रम्याग्रिमपरपदं न कर्त्तव्यम् ॥ अनन्तरे ॥ २९७ ॥ शब्दतश्चार्थतश्चानन्तर्य्ये सङ्क्रमः स्यात् । शब्दतआनन्तर्य्ये गन्धर्वस्त्वा विश्वावसुरित्यत्र विश्वस्यारिष्टयै इत्याद्येकशेच्चारितं पुनरिन्द्रस्य बाहुरित्यादौ सङ्क्राम्यते । अर्थतो मधुश्च माधवश्चेत्यत्रोच्चारितस्य पदसमुदायस्य शुक्रश्च शुचिश्चेत्यादौ सङ्क्रमः ॥ द्विपदैकपदान्यप्यनुवाके ॥ २९८ ॥ द्विपदे एकपदं च एकस्मिन्ननुवाके पुनरावृत्तौ सङ्क्रम्यते । अत्राप्यनन्तरइति वर्त्तते तेन याऽओषधीरित्यत्रैकदोच्चारितस्य याइत्यस्य याःफलिनीरित्यत्रोच्चारणम् ॥ त्रिरावृत्ते ॥ २९९ ॥ त्रिरावर्त्ततेऽयं संङ्क्रमः स्यात् । व्वाजः । च । मे । प्रसवः । प्रयतिः । मा छन्दः ।

सुतस्य इतौ परे एजपदस्त्वात्“त्वरत्यादिवर्ज्जं ए-
कार”नित्यस्य प्राप्तौ प्रकृतिभावविधानं व्यर्थन्तज्ज्ञा-
पयति । इतौ पदान्तकार्यम्भवति तेन दुरोणसदिति
दुरोण । सत् । इत्यादौ “नान्तःपद”इति निषेधाभा-
वा“त्स्वर्गोऽपञ्चम”इति तृतीयादि भवति । परेण
सन्धिस्तु उभे संहिते स्यातेत्युक्तत्वात्स्थितस्य भिन्नप-
दत्त्वाद्भवति । अपहृतमित्यप । हृतम् । प्रतिज्ञासूत्र-
स्या धर्मा न भवन्ति । प्रतिज्ञासूत्रशेषभूतायामसोघ-
नन्दिन्या“अवग्रहः पदान्तव”दिति सिद्धेऽपि अवग्र-
हे पुनर्जकारविधानात्तेन यज्ञोऽइति यज्ञो ॥ ओका-
रश्च ॥ २६४ ॥ अयमितौ प्रकृत्या । व्वायोऽइति वा-
यो । “ओकारश्च पदान्ते”इत्यनेन प्रगृह्यत्वे स्थितो-
पस्थिते सति प्रगृह्यत्वात्प्रकृतिभावे सिद्धे पुनर्विधा-
नं नियमार्थं इतावेव नान्यत्र । व्विष्णवेते । व्वायवि-
न्द्र । अनवग्रहः किम् । गविष्टाविति गो । इष्टौ ।
अत्र गोशब्दे स्थितोपस्थिते मा भूत् । “उकारो-
ऽपृक्त”इत्यनेन प्रगृह्यत्वात्स्थितोपस्थिते ॥ उकारोऽ-
पृक्तो दीर्घमनुनासिकम् ॥ २६५ ॥ इतौ परे उइ-
तिपदं दीर्घमनुनासिकं ऊँ इति रूपमापद्यते । इति
पदं परे स्थितेऽपि । ऊँऽइत्यूँ इति सिद्धम् । अन्तरि-
क्षतः । “अनाद्युदात्तमित्युक्तत्वात् । अन्तः । पृथि-

भागस्तिर्यङ्नीचोऽविकृतोऽनुदात्तो यस्मिन्नेतादृशः स्यात् । व्विरुरुचुरिति वि । रुरुचुः । सान्तपनेभ्यऽइति साम् । तपनेभ्यः । अत्र पूर्वसूत्रेण रुरुचुरित्यनयोः प्रचये प्राप्तेऽनेनानुदात्तएव विधीयते ॥ अन्तःपददीर्घीभावे ॥ २८९ ॥ पदमध्यस्थं दीर्घत्वं यस्य पदस्य तस्मिन् स्थितोपस्थितं स्यात् । मामहन्ताम् । ममह न्तामिति ममहन्ताम् । पूरुषः । पुरुषऽइति पुरुषः । इदं पदान्तस्थत्वाभावोपलक्षणम् । आयुनक् । अयुनगित्ययुनक् । अन्तःपदे किम् । पिब सोमम् । पिबा सोमम् ॥ विनामे ॥ २९० ॥ अन्तःपदइत्यनुवर्त्तते । अन्तः पदे दन्त्यस्य मूर्द्धन्यभावे सति स्थितोपस्थितं स्यात् । सुषाव । सुसावेति सुसाव । सीषधाम । सीसधामेति सीस । धाम । अन्तःपदे किम् । आपो हि ष्ठ । हिस्थ ॥ प्रगृह्ये ॥ २९१ ॥ प्रगृह्ये पदे स्थितोपस्थितं स्यात् । द्वेऽइति द्वे । द्यावापृथिवीऽइति द्यावा । पृथिवी । इन्द्रवायूऽइतीन्द्र । वायू । चमूऽइति चमू । अस्मेऽइत्यस्मे । त्वेऽइति त्वे ॥ मे ॥ २९२ ॥ इत्युदात्तस्य प्रगृह्यत्वात् । मेऽइति मे । रायः । उदात्तं किम् । मे व्वरुण । अमीऽइत्यमी ॥ प्लुतमितौ ॥ २९३ ॥ प्लुतमक्षरमितौ प्रकृत्या । एतस्योदाहरणं क्रमप्रकरणे वक्ष्यते ॥ "पदान्तपदाद्योः सन्धिरिति नियमात्

श्रेयः करेति श्रेयः । कर । आयुष्प्याः । आयुःपाऽइत्यायुः । पाः । ऋतस्पते । ऋतपतऽइत्यृत । पते । अहस्पतये । अहःपतयऽइत्यहः । पतये । दुदुक्षन् । दुधुक्षन्निति दुधुक्षन् । विश्वप्सीवेति च ॥ ३८५ ॥ इदं च पूर्वमुक्ता स्थितोपस्थितं कर्त्तव्यम् । विश्वप्सीवोपस्थिते ॥ ३८६ ॥ विश्वप्सीदमिवे परे प्रकृत्या भवति । उपस्थिते विद्यमानं चेत् । विश्वप्सी व । विश्वप्सीवेति विश्वप्सी । इव । सꣳहितावदवग्रहः स्वरविधौ परञ्च सर्व्वञ्चेदनुदात्तम् ॥ ३८७ ॥ अवग्रहयोग्यं पूर्वं पदं स्वरविधौ संहितावद्भवति परं च सर्वञ्चेत्संहितावत्सर्वमनुदात्तञ्चेत् । आस्वरेत्यऽइत्यास्वरे । स्त्यः । "नोदात्तस्वरितोदय"मिति निषेधात्प्रचयो न । प्रजावतीरिति प्रजा । वतीः । अत्रो"दात्ताच्चानुदात्त"मिति वकारस्य स्वरितः । वह्नितममिति वह्नि । तमम् । अत्र"स्वरितात्पर"मित्यनेन तमस्येत्यस्य प्रचयो भवति । स्वरविधौ किम् । धावद्भ्यऽइति धावत् । भ्यः । अत्र संहिताया अभावा"त्स्पर्शोऽपञ्चम" इति तृतीयो न । सर्वानुदात्तत्त्वाभावे विशेषमाह ॥ इति परस्मिन्थ्येङ्गोचान्तोदात्ते मध्योदात्तपर्व्वणि कालवस्य वा ॥ ३८८ ॥ परमित्यनुवर्त्तते । अन्तोदात्ते मध्योदात्ते वा पदे इतेः परभूते चर्चापदे परो

श्वामित्रो गोपाम्नग्राऽउगमङ्गानि कक्षीवन्तमद्धा-त्मनीरवन्नीहारेण प्रावृता घनाघनऽईहृङ्ग्न्याहृङ्-शूघनासः कुरवङ्कुचरः प्रियङ्गवो नीवारा एकादश षोडश चन्द्रमाऽआयुवो व्याघ्रोऽनड्वान्नगविष्ठि-रः कर्पर्हिने पुलस्तये निषङ्गिणे कुलालेभ्यः क-र्मारेभ्यः पुञ्जिष्ठेभ्यो द्वीप्याय नीप्याय किंशिला-यैलब्दाः शूकाराय शुक्लताय चराचरेभ्यः पारावताञ्गोलत्तिकाऽऽखुरजगरो व्विपन्यवो दाचायणाऽ-भ्यायवठं० सुरामं बृहस्पतिर्व्वनस्पतिर्न्नराशंस० सुर-भिर्न्नरिष्टठायै ॥ ३८३ ॥ एतानि सप्ततिपदानि नावगृ-ह्यन्ते । इदं दिक्प्रदर्शनार्थम् । अन्यान्यप्येवंविधानि द्रष्टव्यानि । उतस्थानम् । आदिसंशयात् । विशौजाः अन्यायसमासात् । उगणाः । उपसर्गैकदेशलोपात् । पुं-श्चलूम् । अनुनासिकोपधत्वात् । अवत्तानाम् । धात्वे-कदेशलोपात् । इत्यादीनि । तथा चोक्तम् । आदिम-ध्यान्तलुप्तानि समासान्न्यायभाञ्जि च ॥ नावगृह्णन्ति-कार्यः परान्यागमवन्ति च ॥ १ ॥ चकारोऽनुक्तसमुच्चया-र्थः । तेन धजीमानित्यत्र नावग्रहः । अत्र सम्प्रदाया-नुसारेण व्यवस्था ॥ अनितावन्तर्व्विकारागमस्प्रागु-त्का ॥ ३८४ ॥ इतिरहितं पदं मध्यस्थविकारागम-सहितं पूर्व्वमुच्चार्य्य स्थितोपस्थितं कार्य्यम् । स्थेयस्कर ।

म् ॥ समिद्राभ्यांव्वत्सरः ॥ ३७९ ॥ सम् । इदा भ्यां वत्सरेऽवग्रहो न स्यात् । सँव्वत्सरः । इदा वत्सरः । समिदाभ्यां किम् । परिवत्सरऽइति परि । व्वत्सरः ॥ प्राग्निवभ्यामनिन्धौ प्रक्षेपे ॥ ३८० ॥ प्रअग्निइत्येताभ्यां इन्धधातुभिन्ने परे एकीभावसन्धाववग्रहः स्यात् । प्राणः । आग्निध्रम् । अनिन्धौ किम् । प्रेद्धऽइति प्र । इद्धः । प्राग्निभ्यां किम् । अपानऽइत्यप । आनः । व्वीध्रायेति वि । इध्राय ॥ जनयत्याऽओषधयो हषायिषत नहि च नारनभ्यमजावयो व्वलगम् ॥ ३८१ ॥ जनयत्या इत्यादीन्यष्टौ नावगृह्यन्ते ॥ जनयत्यै त्वा । ओषधयः प्रति । भागमाहृषायिषत । नहि तेषाममा च न । कदा चन । पावकोऽअस्माभ्यम् । उपहूताऽअजावयः । अहन्तंव्वलगमुत्किरामि ॥ समानोऽनश्वमेधे ॥ ॥ ३८२ ॥ समानशब्दो नावगृह्यते । अश्वमेधे न चेत् । ये समानाः । अनश्वमेधे किम् । समानऽइति सम् । आनः । तेजोऽसीत्यध्याये एतदारभ्याध्यायचतुष्टयमश्वमेधसञ्ज्ञकम् ॥वायुरसजातः समुद्रोऽहोरात्रे व्विश्वानरो व्विश्वाहाग्रहायणोऽसपत्ना गोधा गोधूमाऽआशुशुक्षणिर्न्न्यग्रोधः पुरोडाशः प्रावणेभिरशीतमतस्करान्नमस्माश्वत्थऽउपस्तिर्म्मीकिर्व्वि-

कारेण ॥ ३७२ ॥ प्रतिषेधवाचिनः परेणाकारेणा
वग्रहो नस्यात् । अनातताय । अनाधृष्याः ॥ द्वापू-
र्व्वात् ॥ ३७३ ॥ द्वाइतिपूर्व्वम्पदं नावगृह्यते । द्वादश ॥
सङ्ख्या पूर्व्वश्च धा ॥ ३७४ ॥ सङ्ख्यावाचकपूर्व-
पदं धाइत्येतस्मिन्परे नावगृह्यते । त्रिधा । सप्त-
धा । कतिधा ॥ द्वन्द्वानि द्विवचनान्तानि स्वरान्तपू-
र्व्वपदानि ॥ ३७५ ॥ स्वरान्तपूर्वपदमेषां तानि द्विवच-
नान्तानि नावगृह्यन्ते । मित्रावरुणाभ्याम् । अ-
ग्निषोमौ । स्वरान्तेत्यादि किम् । ऋक्सामयोरित्यृ-
क् । सामयोः ॥ तद्धिते चैकाक्षरवृद्धावनिहि-
ते ॥ ३७६ ॥ तद्धिते सत्येकाक्षरस्य पूर्वपदस्य वृद्धौ
उत्तरपदेनाव्यवहितायामवग्रहो न स्यात् । सौभा-
ग्यम् ॥ त्रैस्तुभेनेति त्रै । स्तुभेन । अनिहिते किम् । सा-
म्राज्यमिति. साम् । राज्यम् । एकाक्षरे कि-
म् । आनुस्तुभमित्यानु । स्तुभम् ॥ अञ्चतिसहत्योः
हल्लोपे ॥ ३७७ ॥ हल्लोपे सति अञ्चतिसहत्योः प-
रयोर्नावग्रहः स्यात् । प्राङ् । प्रत्यङ् । ऋताषाट् ।
हल्लोपे किम् । आच्च्योत्या । अच्य । पृतनासह्याये-
ति पृतना । सह्याय । अनुरुसुभ्यां हल्लोपे ॥ ३७८ ॥
अन्वौ सहतौ च परेऽवग्रहनिषेधो न स्यात् । उरु-
व्यञ्चनित्युरु । व्यञ्चम् । सुषाहमिति सु । साह-

भिरिति वषट् । कारेभिः । सठँ॰समिति सम् । सम् । प्रायनायेति प्र । अयनाय ॥ एकात्समीची ॥ ३६७ ॥ एकशब्दात्परः समीचीशब्दोऽवगृह्यते । एकम् । समीचीऽइति सम् । ईची । एकात्किम् । समीचीऽइति समीची । उरसा ॥ त्वायवः शँय्योर्वर्हिर्धाऽस्मयुम्मृन्मयीॅसुम्नयाशुया साधुया धृष्णुया विशालमनुया ॥ ३६८ ॥ एतान्येकादशपदानि सावग्रहाणि स्युः । त्वायवऽइति त्वा । यवः । शँय्योरिति शम् । योः । बर्हिर्धेति बर्हिः । धा । अस्मयुमित्यस्म । युम् । मृन्मयीमिति मृत् । मयीम् । सुम्नयेति सुम्न । या । आशुयेत्याशु । या । साधुयेति साधु । या । धृष्णुयेति धृष्णु । या । विशालमिति वि । शालम् । अनुयेत्यनु । या ॥ मृगयुमुभयादतोऽपामार्गं किम्पूरुषमिति च ॥ ३६९ ॥ एतानि चत्वारि पदान्यवगृह्यन्ते । मृगयुमिति मृग । युम् । उभयादतऽइत्युभय दतः । अपमार्गेत्यप । मार्ग । किम्पुरुषमिति किम् । पुरुषम् ॥ अधीवासमित्येके ॥ ३७० ॥ एकशब्दो मुख्यार्थः । एतस्यावग्रहं स्यात् । अधिवासमित्यधि । वासम् ॥ प्रतिषेधे नावग्रहः ॥ ३७१ ॥ प्रतिषेधवाचिनि पूर्वपदेऽवग्रहो न स्यात् । अरत्नसा । अनिरा । उत्तरेण चा-

समित् । भिः । ह्रस्वेत्यादि किम् । व्रातेभ्यः । पत्नीभ्यः । विभक्तीति किम् । गर्द्दभः । स्विति चानन्तौ ॥ ३९२ ॥ ह्रस्वव्यञ्जनाभ्यामकृतषत्वे स्विति विभक्तिप्रत्यये परेऽवग्रहः स्यात् हृत्स्विति हृत् । सु । अप्स्वित्यप् । सु । धामस्विति धाम । सु । अनन्तौ किम् । अग्निषु । स्नुषु । विभक्तीति किम् । असुर् । ह्रस्वेति किम् । यासु । वर्णसङ्ख्येऽन्यतरतः ॥ ३९३ ॥ समासइति मण्डूकप्लुतिन्यायेनानुवर्त्तते मध्ये त्वसम्भवान्न सम्बध्यते । वर्णवाचके सङ्ख्यावाचके च समासे विकल्पेनावग्रहः स्यात् । धूम्ररोहितइति धूम्र । रोहितः । पञ्चदशेति पञ्च, दश । त्रयोदशेति त्रयः । दश । विभाषितत्वात् । त्रिनवत्यस्त्रिंशाविति त्रिनवत्रयस्त्रिंशौ । अत्र न । व्यवस्थितविकल्पः । सम्प्रदायानुसारेण पठनीयम् ॥ अनुदात्तोपसर्गो चाख्याते ॥ ३९४ ॥ अनुदात्ते उपसर्ग आख्यातपरेऽवग्रहः स्यात् । उपधावतीत्युप । धावति । सम्भरन्तीति सम् । भरन्ति ॥ गिरित्रशयोः ॥ ३९५ ॥ गिरिशब्दोऽवगृह्यते त्रशयोः परयोः । गिरिशेति गिरि । श । गिरित्रेति गिरि । त्र ॥ इवकाराम्रेडितायनेषु ॥ ३९६ ॥ इवकारादिषु चतुर्ष्ववग्रहः स्यात् । शुचीवेति शुचि । इव । वषट्कारे-

तृ । ऋतुथऽइत्यृतु । थः । अन्तत्त्वमित्यन्तत्त्वम् । देवत्रेति देव । त्रा । ज्येष्ठतातिमिति ज्येष्ठ । तातिम् ॥ धात्वर्थे यकारे स्वरपूर्वे ॥ ३५८ ॥ धातुसञ्ज्ञानिमित्तभूतो यकारः क्यजादिः स्वरपूर्वं तस्मिन्परेऽवग्रहः स्यात् । वृषयमाणऽइति वृष । यमाणः । धात्वर्थे किम् । जायमानः ॥ वांसौ च भूतकाले स्वरेण ह्रस्वादनुपि ॥ ३५९ ॥ स्वरेण तृतीया पञ्चम्यर्थे । ह्रस्वस्वरात्परभूते वांसशब्दे भूतकालार्थे परेऽवग्रहः स्यात्स उपरूपो न चेत् । युच्चिवांसऽइति यच्चि । वांसः । सस्वांसऽइति सस्व । वांसः । स्वरेण किम् । चिकित्वान् । ह्रस्वात्किम् । अन्यशाखीयम् । जिगीवांसः । भूतकाले किम् । सुविद्वांसऽइति सु । विद्वांसः । अनुपि किम् । तस्थुषः ॥ प्रत्नपूर्वविश्वेमर्तुभ्यस्था ॥ ३६० ॥ एभ्यः पञ्चभ्यः स्थाप्रत्ययेऽवग्रहः स्यात् । प्रत्नथेति प्रत्न । था । पूर्वथेति पूर्व । था । विश्वथेति विश्व । था । इमथेतीम । था । ऋतुथेत्यृतु । था ॥ ह्रस्वव्यञ्जनाभ्यामकारादौ विभक्तिप्रत्यये ॥ ३६१ ॥ ह्रस्वाद्व्यञ्जनाच्च परे भकारादौ विभक्तिसञ्ज्ञे प्रत्यये परेऽवग्रहः स्यात् । अग्निभिरित्यग्नि । भिः । धावद्भ्यऽइति धावत् । भ्यः । तच्चभ्यऽइति । तच्च । भ्यः । समिद्भिरिति

व्विँग ॥ ३५१ ॥ एते शब्दाः पूर्वेणावगृह्यन्ते । देववी-
तममिति देव । वीतमम् । देवहूतममिति देव ।
हूतमम् । सुहूतममिति सु । हूतमम् । सुगोपातमऽ-
इति सु । गोपातमम् । सुधातमऽइति सु । धातमः ॥
सध्मदेवजनेभ्यश्च ॥ ३५२ ॥ इदं च पूर्वेणावगृह्य-
ते । सध्मदेवजनेभ्यऽइति सध्म । देवजनेभ्यः ॥
तूणवद्ध्ममुत्तरेण ॥ ३५३ ॥ इदमुत्तरेणावगृ-
ह्यते तूणवऽध्ममिति तूणव । ध्मम् ॥
रायस्पोषदे विजावेति च ॥ ३५४ ॥ इमे चोत्तरेणा-
वगृह्यते । रायस्पोषदऽइति रायस्पोष । दे । विजा
वेति विजा । वा ॥ वज्र्यप्रकृतावागन्तुना पर्वणा ॥
३५५ ॥ वज्र्यपदसमासे पाश्चात्कालिकेन पदेनावग्र-
हः स्यात् । प्रजापतिरिति प्रजा । पतिः । सुप्रजाऽइ-
ति सु । प्रजाः ॥ तद्वति तद्धिते न्यायसंहितं चेत् ॥
३५६ ॥ वतीति तन्त्रेण द्विरुच्चारितं तदस्ति यस्मिंस्तः
तस्मिन्मत्वर्थे विद्यमाने तद्धिते वति प्रत्यये च परेऽव
ग्रहः स्यात् । शास्त्रेणासन्धिमत्पदं चेत् । मधुमदिति
मधु । मत् । सँव्वतमिति सम् । व्वतम् । न्यायसंहितमिति
किम् । मरुत्वान् । अत्र "स्रगोऽपञ्चम" इति तृतीयः
शास्त्रसिद्धोपि न कृतः । अतो न भवति ॥ शस्त्वन्ता-
तातिषु च ॥ ३५७ ॥ शमित्यादिषु चतुर्ष्ववग्रहः स्या-

पदपाठे स्यादवसानवर्ज्जम् ॥ तद्यथा॥ पूर्व्वस्योत्तरसंहितस्य ॥ २४३ ॥ स्थितोपस्थितमवगृह्यस्य ॥ २४४ अन्तःपदेदीर्घीभावे॥ २४५॥ विनामे॥ २४६॥ प्रगृह्ये॥ २४७॥ रिफिते निरुक्ते॥ २४८॥ तत्रावग्रहवतः पदस्य स्थितोपस्थितं स्यात्। ये विधयः स्थितोपस्थितौ वेष्टने न भवन्ति ते तत्प्रकरणे एव दर्शिताः। कुत्रावग्रहः कर्त्तव्यस्तदाह ॥ समासेऽवग्रहो ह्रस्वसमकालः॥ २४९ ॥ समासइत्यधिकारः। समासेऽवग्रहो ह्रस्वसमकालः एकमात्राकालो विरामः स्यात्। स च चर्चायां प्रदर्शनीयः सम्प्रदायात् ।अन्तःपार्श्व्यमित्यन्तः। पार्श्व्यम् ।अनुरूपमित्यनु। रूपम्। व्रतपतऽइति व्रत । पते। पुरोगाऽइति पुरः। गाः। मणिवालऽइति मणि। मालः। ऋक्सामाभ्यामित्यृक्। सामाभ्याम् । अवग्रहइत्यधिकारः॥ तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे ॥ २५० ॥ समासाभावादारम्भः। अतिशये विद्यमानयोस्तरतमयोरवग्रहः स्यात्। दक्षिणशब्दः प्रतियोगी न चेत्। पूर्णतरमिति पूर्ण। तरम्। प्रप्रितममिति प्रप्रि। तमम्। अदक्षिणेत्यादि किम्। द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरमित्यत्रोत्तरमित्येव। अतिशये किम्। कारोतरः॥ वीतमहूतमस्तुतमगोपातमरत्नधातमवसुधातमाः पू-

म् । परा । उप । इत्यादयो विंशतिरुपसर्गाः । देवः । सविता । इत्यादीनि नामानि । वा च उतेत्यादयो निपाताः ॥ पदविच्छेदोऽसंहितः ॥ २३८ ॥ पदे पदे विच्छेदो विलम्बेनोच्चारणं असंहितः । न संहिता यस्मिन्त्सः पदपाठः । धिसन्धकेषु विसर्गस्य लोपादि-सर्गान्तत्वस्वरान्तत्वनिर्णयार्थं सन्दिग्धानि लिख्यन्ते । विभ्राड्विराजद्जयस्पृधः । विभ्राड्विराजति । इति पदद्वये ऊष्मान्तं ऊष्मा विसर्गः । अन्यत्र स्वरान्तम् । विश्वा रूपाणि ॥ २३९ ॥ पृथिव्यापदं मन्वीत्यस्मिन्स्वरा-न्तमन्यत्रोष्मान्तम् । इमावदं विश्वा । वः । ब्रह्म हरीयुक्ता जजान नु कम् । इति सप्तसु स्वरान्तम् । अन्यत्रोष्मान्तम् । इमा रुद्रायेत्यादि । व्विष्णो बभूव नासत्या भिषजा न आत्रोडं या देवा हविषा नो मृडातः । नोऽअच्छ वि-मुञ्चइत्येतेषु दशसु ताइति स्वरान्तमन्यत्रोष्मान्तम् । ताः । नः । हिन्वन्तु । हविर्भ्यस्त्योः साध्याद्या इति य-थासङ्ख्यं स्वरान्ते अन्यत्र विसर्गान्ते । आशीर्हीः । व्रसुभिः ॥ २४० ॥ व्रविरेवो विवदंप्युवमित्यनयोर्धिष्ण्यास्व-रान्तमन्यत्र विसर्गान्ते । ऊचिषे । धिष्ण्या ये ॥ मर्त्तो व्वरीत मर्त्तष्व्वग्निः परोमर्त्तस्ते मर्त्तइति च ॥ २४१ ॥ एते-षु चतुर्षु मर्त्तशब्दोऽयकारः । अन्यत्र मर्त्यः ॥ क्रमो-क्ताऽऽवृत्तिः पदेषु ॥ २४२ ॥ क्रमप्रकरणे उक्ता आवृत्तिः

ऽअरोचथाः । यथा समुद्रःऽएजति । यऽउपरासऽईयुः । दूरस्थस्यापि अर्थतः सम्बन्धो ग्राह्यः । तथा चोक्तम् । यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ॥ अर्थतो ह्यसमानानामानन्तर्य्यन्न कारणम् ॥ १ ॥ ह्नेश्च ॥ २३० ॥ हिशब्दादुत्तरमाख्यातन्नानुदात्तम् ॥ आपो हिष्ठ ॥ उत्तरेऽपि ॥ २३१ ॥ हिशब्दे परे चाख्यातन्नानुदात्तम् । वासुशन्ति हि ॥ नेत् ॥ २३२ ॥ अस्मान्निपातसमुदायात्परमाख्यातं नानुदात्तम् ॥ नेत्त्वदपचेतयातै ॥ समनसस्करत् ॥ २३३ ॥ समनसइत्यस्मात्परं कारित्याख्यातं नानुदात्तम् । असपत्नाः समनसस्करत् ॥ द्वयोः पूर्वं समुच्चये ॥ २३४ ॥ द्वयोराख्यातयोः समुच्चये वर्त्तमानयोः पूर्वन्नानुदात्तम् । शर्म्म च स्थो वर्म्म च स्थः । शञ्च वक्षच्च परि च वक्षत । समुच्चये किम् । तन्तभिन्नतं वञ्ज्नेन तन्त भिन्नतम् ॥ इति प्रकृतिस्वराः ॥ अर्थः पदम् ॥ २३५ ॥ अर्थोऽस्ति यस्मिन्नर्थवाचकः । अक्षरसमुदायो''क्षरं वा पदं स्यात् । एषः । सः । तत् । उत । त्वा । आ । अवतु ॥ तच्चतुर्द्धा ॥ २३६ ॥ तत्पदं चतुः प्रकारं स्यात् । उक्तं च । क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ॥ सत्त्वाभिधायकन्नाम निपाताः पादपूरणाः ॥ २३७ ॥ अग्रेवतु । पाहि । इत्याद्याख्यात-

त्वेष्वनु ॥ २२४ ॥ उज्जेषमित्यादिदशसु अनुरनुदा-
त्तो न । अनूज्जेषम् । अन्वावर्त्तें । अन्वापनीफ-
णत् । अनुसठं॰सनिष्यदत् । अनुसँव्रतम् ॥ अनुप्र-
याणम् । अनुसञ्चरन्तम् । अनुसठं॰रभद्वम् । अ-
नुप्रसितिम् । अनुविक्रमस्व ॥ आपप्रोदात्ते ॥ २२५ ॥
आ । उप । एतौ उदात्ते प्रशब्दे नानुदात्तौ भवतः ।
आप्रयच्छ । उपप्रागात् ॥ अभि प्रेह्युपसम्प्रयातप्र-
त्यातनुष्वासुषाव ॥ २२६ ॥ अभिप्रेहीत्यादि चत्त्वारि
निपात्यन्ते । प्रकृत्याऽऽख्यातमाख्यातपूर्व्वम् ॥ २२७ ॥
नानुदात्तम् । पिबन्तु मदन्तु व्यन्तु ॥ उदात्तोऽस्ति
यस्मिन्नुदात्तवतः आमन्त्रितात्परमाख्यातन्नानुदा-
त्तम् । अग्ने पवस्व । होतर्य्यज । एकान्तरादं-
पि ॥ २२८ ॥ एकपदान्तरितादपि उदात्तवतआ-
मन्त्रितात्परमाख्यातन्नानुदात्तम् । ब्रह्मन्नश्व्वम्भ-
न्त्स्यामि । अपिशब्दात्क्वचिदनुदात्तम् । इन्द्राया-
हि । एतन्निर्णये सम्प्रदायएव शरणम् ॥ यद्वृत्तोपप-
दाच्च ॥ २२९ ॥ च अप्यर्थे । यदा यच्छब्देन वृत्तं स-
म्पादितं यत् यदि यतः यत्र यथा ये इत्यादि सर्व्ववि-
भक्त्यन्तं यद्वृत्तं तदुपपदं अर्थतः सम्बद्धं येन पदेन
तस्मादपि परमाख्यातन्नानुदात्तम् । अपिना यद्वृत्ता-
दपि । यमाहुः । यत्रऽऽत्वपयो जग्मुः । यतो जातो

द्युदात्ता दशैतेषामन्तोदात्तमभिस्त्वयम् । १ । उपसर्गउपसर्गे ॥ २१८ ॥ उपसर्ग उपसर्गे परेऽनुदात्तः । सम्प्रच्यवध्वम् । सम्प्रयात ॥ आम्रेडिते चोत्तरः ॥ २१९ ॥ द्विरुच्चारणे पर उपसर्गोऽनुदात्तः । प्रप्र यज्ञपतिम् । सꣳ॰समित् ॥ कृदाख्यातयोश्चोदात्तयोः ॥ २२० ॥ उदात्तोऽस्ति ययोरुदात्तवति कृदन्ते उदात्तवत्याख्याते परे उपसर्गोऽनुदात्तः । विभ्राजमानः । सम्भरन्ति । उदात्तयोः किम् । उत्पुनामि । अवधूतम् ॥ नाभ्येकाक्षरस्य स्वरसन्धयेऽकृति ॥ २२१ ॥ अभिरेकाक्षरश्चोपसर्गः स्वरात्मके उपसर्गेण सन्धिमति कृदन्तभिन्ने परेऽनुदात्तो न स्यात् । अभ्यादधामि । अभ्यषिञ्चन् । व्याकरोत् । न्यतोदत्पिता नः । व्यदधुः । अकृति किम् । एत्याऽऽरूपः ॥ आपूतजातयोः ॥ २२२ ॥ आद्व्ययमुपसर्गः पूतजातयोः परयोरनुदात्तो न स्यात् । आपूतः । आजातः ॥ अधि नि प्र प्रति श्रितादिषु प्रभानवः पचतेषु ॥ २२३ ॥ अधीत्यादयश्चत्वारो यथासङ्ख्यं श्रितादिषु चतुर्षु नानुदात्ताः । अधिश्रिताः । विश्वन्यनिरणम् । प्रभानवः सिस्रते । प्रतिपचता गृभीषत ॥ उन्नेतमावर्त्तऽआपनीफणत्सꣳ॰सनिष्यदत्सꣳवर्तं प्रयाणꣳ॰सञ्चरन्तꣳ॰सꣳ॰रभध्वं प्रसितिँ विक्रमस्व-

व्येशाहमस्य । त्वमस्य यन्ता । महीमस्य स्तोत्रे, यऽईशेऽअस्य । ईशानमस्य ॥ प्रत्नांस्यज्ञस्य हविषः पाहीत्यातं मद्धो यजमानस्य होतुरजरासो लोकेषु च ॥ २१४ ॥ प्रत्नामित्यादोकादशस्तु अस्येत्यन्तोदात्तं स्यात् । अस्य प्रत्नाम् । अस्य यज्ञस्योद्दचः । अस्य हविषस्तना । सुमनाऽअस्य पाहि ।अस्येदिन्द्रो वावृधे । अस्य यन्ता । अस्य मद्धः पिबत । अस्य यजमानस्य । अस्य होतुः प्रदिशि । अस्याजरासः । अस्य लोकः सुतावतः । अनुदात्तमन्यत् ॥ २१५ ॥ उक्तान्यं यदस्येतिपदमनुदात्तम् । कत्यस्य विष्ठाः । षडस्य विष्ठाः ॥ अनुदात्तमाख्यातमामन्त्रितवत् ॥ २१६ ॥ तिङन्तमामन्त्रितवत्पदं पूर्वमपादादौ विद्यमानं परस्परान्वितार्थकं चेदनुदात्तम् । पशून्पाहि । हव्यंठ॰ रक्ष । पदपूर्वं किम् ।ऽयन्तु वयः । विदेदग्निः । अपादादौ किम् । अरातीः सहस्व । परस्परान्वितार्थकं किम् । विष्णो पाहि ।पाहि यज्ञम् ॥ परोपावप्रतिपर्य्यन्वप्यत्यध्याङ्प्रसन्निर्हुरुन्निविस्वभि ॥ २१७ ॥ परा । उप । अव । प्रति । परि । अनु । अपि । अति । अधि । आङ् । प्र । सम् । निर् । दुर् । उत् । नि । वि । सु । अभि । एते विंशतिरुपसर्गाः । तथा चोक्तम् । विंशतेरुपसर्गाणामुक्ता एकाक्षरा नव । आ-

त्। त्रिमात्रं च निपात्यते । अथः स्विदासी३त्। विचारे किम् । का स्विदासीत् । अन्तोदात्तमित्यधिकारः ॥ द्वन्द्वश्चेन्द्रसोमपूर्वं पूषाग्निवायुषु ॥ २०८ ॥ पूषादिषु त्रिषु उत्तरपदभूतेषु इन्द्रसोमपूर्वपदकं द्वन्द्वमन्तोदात्तं स्यात्। इन्द्रापूष्णोः। इन्द्राग्नी तमप। इन्द्रवायुभ्याम् । सोमापौष्णः ॥ अग्निश्चेन्द्रे ॥ २०९ ॥ इन्द्रशब्दे उत्तरपदे सति अग्निपूर्वो द्वन्द्वोऽन्तोदात्तः स्यात् । ऋक्सामयोः श्लिष्ये ॥ यतो गतौ ॥ २१० ॥ यतइत्येतत्पदमन्तोदात्तं स्याद्गत्यर्थकं चेत् । स्वर्यतो धिया । गतौ किम् । यतो जातः प्रजापतिः ॥ पायोर्व्विशः ॥ २११ ॥ पायुशब्दाद्विशइत्ययमन्तोदात्तः । पायुर्व्विशः ॥ पायोः किम् । दैवीर्व्विशः ॥ आयुरर्य्यमोर्व्वशश्यस्तिभ्यः ॥ २१२ ॥ अर्य्यमादिभ्यस्त्रिभ्यः पर आयुःशब्दोऽन्तोदात्तः । अर्य्यमायुः । उर्व्वश्यायुः । विधानसामर्थ्याद्व्यवधानेऽपि । कृष्णसस्ति । आयोद्वा । एभ्यः किम् । आयुर्म्मे ॥ अस्य रोचनासौ बोधा मे पारम्पुरऽएतारो दिवः कोऽहन्वस्मद्दीर्घ्यऽईशऽईशानेभ्यः ॥ २१३ ॥ रोचनादिद्वादशभ्यः परोऽस्य शब्दोऽन्तोदात्तः । रोचनाऽस्य । असावस्य पिता । बोधा मेऽअस्य । तमसस्पारमस्य । पुरऽएतारोऽअस्य । दिवोऽअस्य पृष्ठम्। कोऽअस्य ।

त्तानि स्युः । इन्द्राबृहस्पतिभ्यान्त्वा देवाऽव्यम् । इन्द्राबृहस्पतीऽऊरुभ्याम् ॥ सर्व्वमग्ना ३ इ लाजी-ऽञ्छाचीनिति त्रिमात्राणि च ॥ २०३ ॥ अग्ना इत्यादिपदत्रयं सर्व्वमुदात्तं स्यात् । त्रिमात्रोऽस्ति येषु तानि त्रिमात्राणि त्रिमात्रस्वरविशिष्टानि निपात्यन्ते । अग्ना३इ । लाजी३न् । शाची३न् ॥ प्रणवश्च ॥ २०४ ॥ अयंच सर्वोदात्तस्त्रिमात्रश्च स्यात् । मादयन्तामो ३म्प्रतिष्ठ । ओं३क्रतो ॥ विवेशा३इति चानुदात्तम् ॥ २०५ ॥ उत्तरम्पूर्वं इत्युत्तरसूत्राभ्यामपकृष्यते । अवसाने विद्यमानमनुदात्तं विवेशाइ३ति पूर्वं त्रिमात्रस्वरविशिष्टं निपात्यते । विश्वम्भुवनमाविवेशा३ । उत्तरं किम् । आविवेश कान्यन्तः । अनुदात्तं किम् । येषु व्विश्वम्भुवनमाविवेश । हिरण्यगर्भऽइत्यध्याये विवेशपदस्य चतुर्वारमेकस्मिन्सन्दर्भे पठितत्वात्पूर्वत्वस्य सापेक्षत्वात्तदध्यायस्यस्यैव प्लुतत्वम् । तेनान्यत्र अन्तराँ२ ॥ ऽआविवेश । अभिसँव्विवेशेत्यादौ न ॥ आसीदितिचोत्तरँव्विचारे ॥ २०६ ॥ विचारे वर्त्तमानमवसानस्थं आसीदितिपदमनुदात्तविशिष्टं निपात्यते । उपरि स्विदासीत् । विचारे किम् । स्वित्कयाऽसीत् ॥ पूर्व्वमन्तोदात्तम् ॥ २०७ ॥ विचारे वर्त्तमानं पूर्वमन्त्यमध्यस्थमासीदितिपदमन्तोदात्तं स्या-

तोतो रायः । अपोषे किम् । रायस्पोषम् ॥ न भागमोग्निषयोः ॥ १९९ ॥ एतयोः परयो रायइत्येतदाद्युदात्तन्न । रायो भागम् । रायऽईशिषे ॥ त्रिधा बद्धहितयोः॥ २००॥ एतयोस्त्रिधाशब्द आद्युदात्तः । त्रिधा बद्धः । त्रिधा हितम् ॥ सुकृतं भूते ॥ २०१ ॥ सुकृतपदमाद्युदात्तं भूतकालवाचकं चेत् । पृथुः सुकृतः । भूते किम् । सुकृतं च मे । अयं पुण्यवाचकः ॥ द्विरुदात्तानि ॥ २०२ ॥ अधिकारोऽयम् ॥ बृहस्पतिर्वनस्पतिर्नराशंसस्तनूनपाच्चे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवाऽअन्वेतवा इति च ॥ २०३ ॥ चकारादुत्तरसूत्रादनामन्त्रितानीत्यपकृष्यते । अनामन्त्रितानि बृहस्पतिरित्यादिद्वादशपदानि द्विरुदात्तानि भवन्ति । अनामन्त्रितानि किम् । तनूनपात्पथः । बृहस्पतेऽअति । वनस्पते वीडुङ्गः । द्यावापृथिवीऽउरो ॥ देवताद्वन्द्वानि चामन्त्रितानि ॥ २०४ ॥ आमन्त्रितानि वर्जयित्वा देवताद्वन्द्ववाचकानि पदानि द्विरुदात्तानि । अग्नीषोमौ । मित्रावरुणौ । देवतेति किम् । दीक्षातपसोः । अनामन्त्रितानि किम् । धेनुर्मित्रावरुणा ॥ इन्द्राबृहस्पतीभ्यामिन्द्राबृहस्पती इति त्रीणि ॥ २०५ ॥ अनयोः शब्दयोस्त्रीण्यक्षराण्युदा-

स्वाहा व्वाजः पयो नमः ॥ १९५ ॥ सर्वोद्दिष्टशब्दा आद्युदात्ताः। सर्व्वँ व्यत्। यत्र व्विश्वम्। धर्षमानुषः। व्विश्वा ऽआशाः । स्वाहा यज्ञम्। व्वाजश्च मे। पयः पृथिव्व्याम्। नमः पर्णाय ॥ असि शिवासुषदा पयस्वतीयत्ते मधुमतीर्व्वर्च्चस्वानोजिष्ठभ्राजिष्ठशुष्मिणी भद्रद्रवाच्च्याय वन्द्यो मेद्ध्यो यम आदित्यस्त्रितः सोमेन स्वसेत्येतेषु ॥ १९६ ॥ शिवादिषु सप्तदशसु असिशब्द आद्युदात्तः स्यात्। असि शिवा। असि यत्ते। भागोऽसि। मधुमतीर्न्नः। असि व्वर्च्चस्वानहम्। अस्योजिष्ठोऽहम् । असि भ्राजिष्ठोऽहम्। असि शुष्मिणी । असि भद्रद्रवाच्च्याय। असि व्वन्द्यश्च। असि मेद्ध्यश्च। असि यमः। अस्यादित्यः। असि त्रितः। असि सोमेन। असि स्वसा अत्र "सन्निकृष्टविप्रकृष्टयोरि"त्यनेन व्यवहितस्य असि स्योनेत्यसिशब्दस्य सुषदाशब्दपरत्वेऽपि आद्युदात्तत्वं। न पयस्वती सहचरितत्वात्सुषदा चासिति सुषदा शब्दस्य आद्युदात्तत्वनिमित्तत्वं । तेनासहचरितस्य स्योनासि सुषदासि ॥ धनदारत्नधाभ्यां च ॥ १९७ ॥ आभ्यां च परोऽसि शब्द आद्युदात्तः । धनदाऽअसि। रत्नधाऽअसि ॥ रायोऽपोषे ॥ १९८ ॥ रायइत्येतत्पदमाद्युदात्तं स्यात्पोषशब्दः परो न चेत्। रायो मे।

पकः। यत्किञ्चिदवयवभेदेऽपि कार्यं प्रवर्तत एवे-
ति। अतएव "एनोऽपापे" इति अखेनदित्यत्र भव-
त्येव। दक्षिणासदः। दक्षिणासद्भ्यः॥ कर्णः स्वाङ्गे॥
१८७॥ कर्णशब्द आद्युदात्तः स्वाङ्गवाचकश्चेत्। क-
र्णौ ते दन्ती। स्वाङ्गे किम्। कर्णो गर्द्दभः॥ मह्नो
नपुं॰ सके॥ १८८॥ मह्न इत्येतदाद्युदात्तं नपुंस-
कलिङ्गं चेत्। मह्नस्त्य। मह्नश्च मे। नपुंसके किम्।
मह्नोऽश्मनः। अयं पुंल्लिङ्गः। अवश्च॥ १८९॥ अयं
चाद्युदात्तो नपुंसकश्चेत्। तव श्यवः। नपुंसके कि-
म्। यवश्च मे। अयं पुंसि॥ अन्धो वीर्य्ये॥ १९०॥
अन्धशब्द आद्युदात्तो वीर्यवाचकश्चेत्। अन्धस्त्य। वी-
र्ये किम्। अन्धन्तमः। अत्रान्धशब्दो निविडार्थः॥ ए-
ता वर्णे॥ १९१॥ अयमाद्युदात्तो वर्णवाचकश्चेत्।
एताऽऐन्द्राग्नाः। एताश्चित्राः। वर्णे किम्। एता
मे॥ रोहितश्च केवलः॥ १९२॥ केवलरोहितशब्द
आद्युदात्तः। रोहितो धूम्ररोहितः। केवलः किम्।
धूम्ररोहितः॥ यन्वीराट्॥ १९३॥ यन्वीशब्द आद्यु-
दात्तो राट्शब्दपरश्चेत्। यन्वी राट्। राट् किम्।
यन्व्यसि॥ ओषधीरनामन्त्रिते॥ १९४॥ अनामन्त्रि-
तऔषधीशब्द आद्युदात्तः। याऽओषधीः। अनाम-
न्त्रितइति किम्। यस्यौषधीः॥ सर्व्वविश्वमानुषाशा

प्तिर्निषेधविषयस्याचोदाहरणम् ॥ कृष्णो ऽगसँय्योगे । १८१ । कृष्णशब्द आद्युदात्तः स्यात् । पशुवाचकस्य विशेषणं न चेत् । कृष्णोऽसि । कृष्णो रात्र्यै । अगगेति किम् । श्वा कृष्णः । अत्र श्वेत्यस्य कृष्णइति विशेषणम् ॥ व्ययवाँश्चान्तः । १८२ । विकारवानन्तःशब्द आद्युदात्तः स्यात् । परोऽन्तः । व्ययवान्किम् । अन्तर्महति । अयमव्ययम् अतो वचनादिकृतो विकारो न ॥ परः प्रधाने ॥ १८३ ॥ अयमाद्युदात्तः प्रधानवाचकश्चेत् । जातः परोऽन्यः । प्रधाने किम् । परो दिवा । अत्र परशब्दोऽन्यवचनः ॥ मात्रा च परिमाणे ॥ १८४ ॥ मात्राशब्द आद्युदात्तः परिमाणवाचकश्चेत् । कस्य मात्रा । परिमाणे किम् । स्विभूर्मात्रा । इदं मातृशब्दस्य तृतीयैकवचनम् ॥ दक्षिणा च ॥ १८५ ॥ अयमाद्युदात्तः । दक्षिणामारोह ॥ न दशविश्वकर्मानिषद्येन्द्रस्य पातु सदःसद्वस्येषु ॥ १८६ ॥ दशेत्यादिसप्तसु दक्षिणाशब्द आद्युदात्तो न । निषद्यादिषु त्रिषु अव्यवहितस्यासम्भवेऽपि निषेधो भवत्येव । तस्मिन्निति वर्णसप्तमीनिर्द्देशविषयं "पदे चेति ज्ञापकात् । दक्षिणा दश । दक्षिणा विश्वकर्मा । दक्षिणतो निषद्य । दक्षिणतऽइन्द्रस्य । दक्षिणतः पातु ॥ तसिलादि"ष्विति पुंवद्भावः । अत्र दीर्घान्तत्वाभावात्पूर्वसूत्रस्याप्राप्तौ निषेधो ज्ञा-

ठं० सिनीवाल्युत्तरं च प्रजापतये ब्रह्मन्निति च ॥ १७७ ॥ इडशब्दादुत्तराणि नव । स्थानशब्दादुत्तराणि षट् । अग्निशब्दादुत्तराणि चत्वारि । भगशब्दादुत्तराणि चत्वारि । इन्द्रशब्दादुत्तरमेकं । सिनीवालिशब्दादुत्तरमेकं, प्रजापतये शब्दादुत्तरे ब्रह्मन्निति । एतानि षड्विंशतिरामन्त्रितानि नानुदात्तानि स्युः । इडे । रन्ते । हव्ये । काम्ये । चन्द्रे । ज्योते । अदिति । सरस्वति । महि । विश्रुति । स्थान । भ्राज । अङ्गारे । वम्भारे । हस्त । सुहस्त । कृशानो । अगने । इन्द्र । वरुण । मित्र । देवाः । भग । प्रणेतः । भग । सत्यराधः । । भग । इन्द्र । गोमन् । सिनीवालि । पृथुष्टुके । प्रजापतये । ब्रह्मन् ॥ भूतिराद्युदात्तम् ॥ १७८ ॥ अथाद्युदात्ताधिकारः । भूतिरित्येतदाद्युदात्तं स्यात् । भूतिश्च मे । नमो भूत्यै येदम् ॥ कदा नरिष्येम पूर्वम् ॥ १७९ ॥ नरिष्येमेत्येतत्पूर्वं कदा आद्युदात्तं स्यात् । नरिष्येम कदाचन । नरिष्येम किम् । कदाचन स्तरीः ॥ आमन्त्रितं च ॥ १८० ॥ सम्बोधनविभक्त्यन्तमाद्युदात्तम् । अग्ने गृहपते ॥ "तेनान्तरेत्येकपदातिदेशात् ऊर्ज्जो नपादित्यत्र ऊर्ज्जः शब्द आद्युदात्तः । वस्तुत ऊर्ज्जः शब्दस्तु अन्तोदात्तः । ऊर्ज्जो नपातम् । "पदपूर्वमिति तु एतस्यापवादः । तस्याप्रा-

त् ॥ १७४ ॥ आमन्त्रितेन अर्थतो देशतश्च सम्बद्धं प-ष्ठ्यन्तमेकपदवत्स्यात् । विश्वासां भुवां पते । इत्ति-ष्ठ ब्रह्मणस्पते । देशतः पूर्वं परञ्च । अत एव "न पृथिवीत्यादिनिषेधः कृतः । अनन्तरं किम् । पते त्वमस्य । यस्यौषधीः प्रसर्पथ । अत्र यस्येति अङ्गमङ्गमित्यनेन सम्बध्यते ॥ न पृथिवि देवयजन्योषध्या देव भूरेः प-वित्रपते पवित्रपूतस्यापान्नपान्नृणान्नृपते सोमाग्नेः सोमेन्द्रस्य सोम सुवीर्यस्य सोम विश्वेषान्देवानां प्र-जापते यस्य यस्य देवाग्ने तवाग्ने वाजस्याग्ने वरु-णस्यापेऽअस्माकम् ॥ १७५ ॥ एतानि पञ्चदश ष-ष्ठ्यन्तानि नैकपदवत्स्युः । प्रतिरन्नन्निति किम् । अ-पान्नपाद्यो वः ॥ सुमङ्गल सत्यराजन्न्विकिरिद्र विलो-हित दरिद्र नीललोहित श्रेयस्कर भूयस्कराम्बेऽअ-म्बिके म्बालिके शरव्ये बृहस्पते शंशिते मरुतोऽअश्वि-ना यज्ञियेऽये द्यावापृथिवीऽउरो अग्ना ३ इपत्नीवँ-स्तानो३ न्प्राचीऽइन्द्रीदुष्टम शिवतम सहस्राक्न शतेषुधे वसुपते वसुदावन् ॥ १७६ ॥ एतान्येकोनत्रिंशदा-मन्त्रितानि नानुदात्तानि । अत्र यानि अपूर्वाणि पा-दादीनि वा तेषामनुदात्तत्वाभावः सिद्ध एव । अन्ये-षामनेन निषेधः ॥ इडोत्तराणि नव स्थानोत्तराणि षडग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेक-

म् । अथातो राख्यातस्य तेन नानुदात्तत्वम् । तेन वरुण अधोहवमित्यस्य न निघातः । इह किम् । युवाना श्रुतम् ॥ मन्ये पदपूर्व्वं० सर्व्वत्र ॥ १७१ ॥ पदपूर्व्वम्मन्ये इत्येतदनुदात्तम् । होतारम्मन्ये । सर्व्वत्रेति यद्वृत्तोपपदाच्चेति निषेधबाधनार्थम् । तम्मन्ये यः ॥ वा घ कमुचितत्समस्माद्वहस्मत्वईम्मय्यो अहे स्विन्निपा- पाताश्चेत् ॥ १७२ ॥ वा इत्यादयश्चतुर्द्दशशब्दा अनुदात्ता निपाताश्चेत् । व्वातो वा ॥ अग्निश्च । इमा नु कम् । यऽउसस्मूत्याम् । हृदया व्विधश्चित् । अवायतः समस्मात् । श्राघा ये । दधे ह गर्ब्भम् । हि ष्मातें । पीयति त्वोऽअनुत्त्वः । काऽई मरे । आविर्म्मर्य्याः । अजारे पिशङ्गिला । कः स्वित् । निपाताः किम् । चिदसि । द्रविणमष्टु यज्ञम् । अन्ये निपाता आद्युदात्ता इति । अथो निपाता आद्युदात्ताइत्युक्तत्वात् ॥ पदपूर्व्वमामन्त्रितमनानार्थे पादादौ ॥ १७३ ॥ पादादौ अविद्यमानं पदपूर्वं सम्बोधनविभक्त्यन्तमनुदात्तं स्यात् तत्पदमामन्त्रितं च परस्परानन्वितं । अरातिमग्ने । रोदसी विष्णो । नियुद्भिर्व्वायो । तव पूरुषः । पदपूर्व्वं किम् । अग्ने व्व्रतपते । व्वायोऽअस्मिन् । पूषन्तव । अनानार्थे किम् । अग्निन्वहि देवाः । अपादादौ किम् । इषन्नग्ने ॥ तेनानन्तरा षष्ठ्येकपदव-

त्वदर्थे किम् । ते नोऽअर्वन्त ॥ ॥ त्वा च ॥ १६२ ॥ इद-
मनुदात्तं स्यात् । भूताय त्वा । गन्धर्व्वस्त्वा ॥ पूर्ववाननु-
देशः ॥ १६३ ॥ पूर्वोक्तार्थवाचकं यत्पश्चादुच्चारितं प-
दमनुदात्तं स्यात् । घासमस्मै । एषाङ्कृणुहि । आ-
स्मिन् । पूर्व्ववानिति किम् । अस्मै क्षत्राय । एषाम्प-
शूनाम् । अस्मिन्त्सधस्थे ॥ असि ॥ १६४ ॥ इदमनु-
दात्तं स्यात् । व्वेदोऽसि । कृष्णोऽसि ॥ यथा गृभो भु-
वोऽग्निभ्यः ॥ १६५ ॥ गृभ इत्यादिभ्यो यथेति
पदमनुदात्तं स्यात् । जीवगृभो यथा । अग्निभुवो य-
था । अग्नयो यथा । एभ्यः किम् । करद्यथा ॥ गि-
र्व्वणः ॥ १६६ ॥ इदमनुदात्तं स्यात् । परित्वा गिर्व्वणः ॥
अग्ने घृतेनेति च ॥ १६७ ॥ अग्ने इत्येतत्पूर्वं घृतेने-
त्येतत्पदमनुदात्तम् । अग्ने घृतेन । अग्ने किम् । अ-
ङ्गिरो घृतेन ॥ प्रचिकितश्च ॥ १६८ ॥ प्रेत्येतत्पूर्वकं
चिकित इत्येतत्पदमनुदात्तम् । प्रचिकितो मनीषा ।
एनोऽपापे ॥ १६९ ॥ एन इत्येतत्पदमनुदात्तं पापेऽवि-
द्यमानं चेत् । उदेनम् ॥ मैनाम् । अस्येनत् । अवि-
शेषात्सर्वलिङ्गं गृह्यते । अपापे किम् । एनश्चकृम ॥
इह पूर्व्वं श्रुतम् ॥ १७० ॥ इहेत्येतत्पूर्व्वं श्रुतमित्येत-
दनुदात्तम् । ममेदिह श्रुतम् । तस्याख्यातत्वादनुदा-
त्तमाख्यातमित्यनेनानुदात्तत्वे सिद्धे विधानं ज्ञापक-

त्राः ॥ १५७ ॥ द्विमात्रा इति ह्रस्वापेक्षया किञ्चित्का-
लाधिक्यस्योपलक्षणं न तु दीर्घत्वस्य । उक्तं च शिक्षा-
याम् । स्वराः संयोगपूर्वा ये व्यञ्जनान्तास्तथान्तगाः ।
एषां कालो द्विमात्रः स्यान्न तु दीर्घा हि ते स्मृताः । १ ।
अग्निः । तत् । जातः । तन् । उत । च । इति सामान्य-
विकाराः ॥ स्वरितवर्ज्जमेकोदात्तं पदम् ॥ १५८ ॥ स्व-
रितमक्षरं अस्ति यस्मिंस्तत्स्वरितवत्पदं वर्जयित्वा ए-
कोदात्तं पदं स्यात् । एकः स्वरः पदे उदात्तः स्वरितो
वा भवति । उत्सर्गोऽयम् । द्युदात्तानि तु वाचकानि
वक्ष्यति । अवशिष्टं तु ॥ अनुदात्तम् ॥ १५९ ॥ अनुदा-
त्तोऽस्त्यस्मिंस्तदनुदात्तं स्वरविशिष्टं स्यात् । सादन्यम् ।
वीर्य्यम् । अनमीवाः । अनुदात्तमित्यधिकारः ॥ नो नौ
मे मदर्थे त्रिद्येकेषु ॥ १६० ॥ नः नौ मे एतानि पदानि
अनुदात्तानि स्युः । आनः । तन्नौ । यन्मे । त्रिद्येकेष्वि-
ति स्पष्टार्थम् । मदर्थ इत्युत्तरार्थम् । संदेहे साहचर्य्यं
नियामकमिति सर्वादेशस्यैव ग्रहणं तेन मे इत्यादेश-
विशिष्टस्य न । रायो मे ॥ मा च ॥ १६१ ॥ मा इ-
त्येतत्पदं अस्मदर्थे विद्यमानं अनुदात्तं स्यात् । प्रमा-
तिर । मदर्थे किम् । मा नो मित्रः ॥ वो वान्ते त्वदर्थे ॥
१६२ ॥ वः । वाम् । ते । इमानि पदानि युष्मदर्थे वर्तमा-
नानि अनुदात्तानि स्युः । देवो वः । संवाम् । मा ते ।

तत्र स्वरयोर्मध्ये यत्रानेकं व्यञ्जनं तत्र किं पूर्वस्याङ्गं किं परस्येति निर्णयार्थमाह ॥ संयोगादिः पूर्वस्य ॥ १५२ ॥ संयोगस्यादिवर्णः पूर्वस्याङ्गम्भवति । इषित्त्वा । अत्र द्वित्वे द्वौ तकारौ । तत्र प्रथमस्तकारः पूर्वस्य द्वितीयस्तकारो वकारश्च परस्य ॥ यमश्च ॥ १५३ यमश्च पूर्वस्याङ्गम् । रुक्मः । अत्र ककारो यमश्च पूर्वस्याङ्गं मकार उत्तरस्य ॥ क्रमजं च ॥ १५४ ॥ संयोगादेः परस्य द्वित्वेन जातं व्यञ्जनं क्रमजं तच्च पूर्वस्याङ्गम् । पार्श्व्यम् । रेफः एकः शकारः पूर्वस्य द्वितीयशकारवकारयकारा उत्तरस्य । वर्ष्ष्याय । रेफः एकः षकारः पूर्वस्य द्वितीयषकारयकारौ परस्य । बाह्वोः । हकार एको वकारः पूर्वस्य । द्वितीयो वकार उत्तरस्य । तस्माच्चोत्तरꣳ स्पर्शे ॥ १५५ ॥ क्रमजादुत्तरं व्यंजनं स्पर्शे परे पूर्वाङ्गं भवति । पार्ष्ण्यां वा । रेफो द्वौ षकारौ पूर्वस्य णकारयकारौ परस्य । वर्ष्ष्मन् । रेफो द्वौ षकारौ पूर्वाङ्गं मकारः पराङ्गम् । यदर्थं पूर्वाङ्गपराङ्गत्वविचारस्तदाह ॥ व्यञ्जनꣳ स्वरेण सस्वरम् ॥ १५६ ॥ यद्यञ्जनं यस्योदात्तादेः स्वरस्याङ्गं तत्तत्स्वरयुक्तं स्यात् । उक्तान्युदाहरणानि । उक्तं च, स्वरउच्चः स्वरो नीचः स्वरः स्वरितएवच ॥ स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥ संयोगपूर्वा व्यञ्जनान्ता अवसानगताः स्वरा द्विमा-

ऋताय सोम, रय्यै त्वा । यजेति धाय्या रूपम् । तन्नो गीर्भिः श्रवाय्यम् । वर्त्तीं रुद्रा नृपाय्यम् । पौरुषेय्या गृभः । नमो हृदय्याय च । सह रय्या निवर्त्तस्व । अग्ने ज्योतिर्न्निचाय्य । शरसि सन्नाय्यमाने ॥ द्विसकारऽ॰ शास्खराश्चेति ॥ १४९ ॥ इमे द्वे द्विसकारे 'स्वरात्सँय्योगादिरिति' द्वित्वे प्राप्ते द्विसकारत्वविधानं ज्ञापकम् । सामान्यतः अन्तस्थास्तु सकारस्य द्वित्वन्न । उक्तं च शिक्षायाम् । सकारस्य द्विरुक्तिर्य्या सा द्वयोरेव नान्यतः ॥ आ च शास्खा च रास्खेति सकारोऽत्र द्विरुक्तिजः । १ । अत एव केशवेनापि "न सो व्योम्नेति सूत्रमकारि ॥ न ह्यष्टचिश्विसतयेभ्यस्त्वैकम् ॥ १५० ॥ ह्यादिभ्यः सप्तभ्यस्त्व इत्यत्र एकमेव व्यञ्जनं न द्वे ॥ ह्वत्रस्य योनिः । ह्चम्बधेत् । चित्रन्देवानाम् । श्वित्रऽआदित्यानाम् । सत्रस्यऽऋद्धिः । लोके तत्र । सचन्त यत्र पूर्वे ॥ वीद्ध्राय वाद्ध्रीनसोद्ध्राश्चराश्चेत् ॥ १५१ ॥ एतेषां त्रयाणां द्वित्वं न प्राणिवाचकाश्चेत् । नमो वीद्ध्राय च । वाद्ध्रीनसस्ते मत्यै । अपा रुद्रो मासाम् । चराः किम् । समुद्राय शिशुमारान् । एतत्प्रकरणं ज्ञानार्थं क्वचिदुच्चारणार्थम् । न व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषोऽस्तीति श्रीभाष्योक्तेः ॥ स्वरोऽक्षरम् । सहाद्यैर्व्यञ्जनै,रुत्तरैश्चावसितैरित्युक्तम् ।

प्राङ्गरिति शिक्षाग्रासुक्तत्वात्केवलं ज्ञानमात्रफलम् । नानुस्वारः ॥ १४० ॥ अनुस्वारो न द्विरुच्यते । इम ँ स्तनम् ॥ सवर्णे ॥ १४१ ॥ सवर्णे परे व्यञ्जनं द्विर्न्न भवति । संय्यौमि । यन्ते ॥ ऋटवर्णे ॥ ॥१४२ ॥ ऋटवर्णे परे न द्विरुक्तिर्भवति ।, अनिष्टृतः । ऊष्मान्तस्थाभ्यइति प्राप्तम् । यमे ॥ १४३ ॥ यमे परे न द्वित्वम् । यक्क्ना । अत्र अन्तःपदइति ककारात्परे यमे जाते ककारस्य संय्योगादित्वात्प्राप्तं द्वित्वन्न ॥ विसर्ज्जनीयः ॥ १४४ ॥ न द्विरुच्यते । दिवः ककुत् । स्वरात्संयोगादिरिति प्राप्तम् ॥ स्ववर्गीये चानुत्तमे ॥ १४५ ॥ उत्तमभिन्ने स्ववर्गीये वर्णे परे द्वित्वन्न । यत् ते । तत् देवानाम् । अनुत्तमे किम् । तन्नः ॥ अवसितं च ॥ १४६ ॥ अवसानगतं व्यञ्जनं न द्विरुच्यते । ऊर्क् । 'परन्तु रेफहकाराभ्या'मिति 'ऊष्मान्तस्थाभ्यश्चेति' वा ककारस्य द्वित्वप्राप्तिः ॥ द्वियकारम् ॥ १४७ ॥ इत्यधिकारः ॥ आप्याय्यमानो यम़ो रय्यै धाय्या रूपं य्यवाय्यं नृपाय्यं पौरुषेय्या हृदय्याय सह रय्या निचाय्य सन्ताय्येति च ॥ ॥ १४८ ॥ इमानि दशरूपाणि द्वियकाराणि निपात्यन्ते, चकारोऽनुक्तसमुच्चयार्थः । तेन रय्या पोषेण । आप्याय्यमानो यमः । यम इति किम् । आप्यायमानो ऽग्र-

पूर्वं तद्व्यञ्जनं न द्विरुच्यते । कृत्स्नहृदयेन । सकारस्य ऊष्मत्वात्स्पर्शद्विर्भावस्य निमित्तत्वं तेन संयुक्तं पूर्वस्पर्शः तकारो न द्विरुच्यते । अत्र पूर्वस्थानेन निषेधः परस्य पूर्वेण । यत्र चोभयतः स्पर्शैः संयुक्ताः शषसाः सह ॥ तत्र नाद्यः क्रमो ज्ञेयो नापरो बोधितो बुधैः ॥ २ ॥ प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ १३८ ॥ द्वितीयाः प्रथमैश्चतुर्थास्तृतीयैः सह द्विरुच्यन्ते । परिभाषेयम् । यत्र द्वितीयानां चतुर्थानां च द्विर्भावः प्राप्तस्तत्रेदमुपतिष्ठते । विकख्याय । शीघ्घ्याय । परमेष्ठ्ठी ॥ व्विष्फ्फुरन्ती ॥ अन्तःपदेऽपञ्चमाः पञ्चमेषु विच्छेदम् ॥ १३९ ॥ पदमध्ये विद्यमानाः पञ्चमभिन्नाः स्पर्शाः पञ्चमेषु यममापद्यन्ते । विच्छेद इति यमसंज्ञा । रुक्क्मः । अग्ग्निः । व्वार्त्रघ्नम् । तनच्चित्त्म । आत्त्नी । व्विद्द्मा ते । सिद्ध्मलम् । पाप्प्मने । अत्र "स्वरात्संयोगादिरिति" द्वित्वे जाते "विकारी यथासन्न" मिति प्रतिवर्गमाद्यानां जित्सञ्ज्ञकत्वात्प्रथमो यमः । द्वितीयानां जित्सञ्ज्ञकत्वात्सोष्मसञ्ज्ञकत्वाच्च द्वितीयः । तृतीयानां धिसञ्ज्ञकत्वात्तृतीयः । चतुर्थानां धिसञ्ज्ञकत्वात्सोष्मसञ्ज्ञकत्वाच्च चतुर्थः । एवं चत्वारः । अत एव चत्वारश्च यमाः स्मृता इति पाणिनीयशिक्षायामुक्तम् । एते ज्ञेयाः । न त्वेषामुच्चारणम् ॥ अशरीरं यमं

कारसंहितोच्चारणविधानाद्रेफधर्माभावात् । दर्श-
तम् । वर्षा, यत्र तुल्यरत्वं तत्र विधानाभावाद्द्वित्वं
भवत्येव । वर्ह्णैः । वर्ष्याय । अत एव पाणिनिना "शरोऽ-
चीति" द्वित्वनिषेधः कृतः । परं रेफहकाराभ्यां व्यञ्जनं
तूष्मवर्जितम् । द्वित्वमापद्यते रेफहकारौ तु न कुत्र-
चित् ॥ १ ॥ ऊष्मान्तस्थाभ्यश्च स्पर्शः ॥ १३३ ॥ च ए-
वार्थो भिन्नक्रमः । ऊष्मभ्योऽन्तस्थाभ्यश्च परः स्पर्श एव
द्विरुच्यते न ऊष्मान्तस्थाः । अश्मन्नूर्ज्जम् । पूष्णः । ह-
स्ते । दधिक्राव्णः । शल्मलिः ॥ विसर्ज्जनीयाद्व्यञ्ज-
नपरः ॥ १३४ ॥ विसर्ज्जनीयात्परः स्पर्शो द्विरुच्यते व्य-
ञ्जनपरश्चेत् । विष्णोः क्रमः । हिरण्यपाणिः प्र-
ति गृभ्णातु । व्यञ्जनपरः किम् । न्यङ्कुः । गौरमृगः
पिद्वः ॥ ङ्नौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ ॥ १३५ ॥ प-
दान्तस्थौ ङकारनकारौ स्वरे परे ह्रस्वपूर्वौ द्विरुच्ये-
ते ॥ युङ्ङसि । अच्चन्नमीमदन्त । ह्रस्वपूर्वौ किम् । सु-
प्राङजः । कुटरुनालभते ॥ नास्वरपूर्वा ऊष्मान्तस्थाः ॥
१३६ ॥ अस्वरेति पर्य्युदासः । तेन स्वसदृशस्य वर्णस्य
ग्रहणम् । ये ऊष्माणोऽन्तस्थाश्च व्यञ्जनपूर्वास्ते द्विर्व-
चनस्य निमित्तं न भवन्ति । वर्ष्मन् । पार्ष्ण्यां वा । व्य-
ञ्जनेति किम् । अप्स्वे ॥ यैस्तु परं तैन्न पूर्व्वम् ॥ १३७ ॥
यैर्हेतुभूतैः परस्य द्विर्भावः क्वचिदुक्तस्तैः सह संयुक्तं

रिषः । रिरिषतेति रिरिषत । सुयवसिनीऽइति सु । यवसिनी । परिवापऽइति परि । वापः । चर्षणि सहामिति चर्षणि । सहाम् । चर्षणिधृतऽइति चर्षणि । धृतः । पुरितेति पुरि । तता । पुरितदिति पुरि । ततु । स्त्रीहकर्णऽइति स्त्रीह । कर्णः । शुराठकर्णऽइति शुराठ । कर्णः । बभ्रुनिकाशाऽइति बभ्रु । निकाशाः । अनुकाशेनेत्यनु । काशेन, अस्वयन्तऽइत्यस्व । यन्तः । अयुनगित्ययु । नक् । सदन्यमिति सदन्यम् । देवयुवमिति देव । युवम् । आकारोपधो यकारमिति सूत्र एतदध्यायस्याप्येतदध्यायस्थत्वात् । स्थितोपस्थिते दृष्टिमानिवेति दृष्टिमान् । इव ॥ स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ॥ १३१ ॥ स्वरात्परः संयोगस्यादिवर्णः पदान्तमध्यादिषु द्विरुच्यते । अनुष्टुप्ते । इषे त्त्वा । आच्च्या जानु । स्वरादिति किम् । श्रुधि श्रुत्कर्ण ॥ परन्तु रेफहकाराभ्याम् ॥ १३२ ॥ तु एवार्थः । रेफहकाराभ्यां परं व्यञ्जनमेव द्विरुच्यते न रेफहकारौ । सूर्य्यः । पूर्व्वः । प्रबाह्वाय । बाह्वोः । रेफहकारयोः प्रत्यक्षश्रुतिनिमित्तत्वेन सामान्यप्राप्तकार्यित्वबाधः । तेन रहभिन्नस्यैवानेन द्वित्त्वम् । अति ह्वस्वम् । अर्हतः । अत्रैतयोर्न्न द्वित्वम् । स्वरे परे रेफात्परेषामूष्मणामनेन द्वित्त्वम् । तत्र रेफस्य ए-

रिहत्वामा भिदन्तो रुद्रेमा स्वस्तये जनयथा च धा-
रयाम पितरा स्थो बोधा मे विचृता बन्धमवता हवेषु
शृणुधी गिरो रक्षा तोकं चर्षणीसहां चर्षणीधृतो
येना समत्सु वनेमातऽऋष्यामा ते शिक्षासखिभ्यस्त्वा
रथं दीया रथेनेता जयत वर्द्धया त्वं प्रब्रवामा इतस्था-
जगन्या परस्याररिमाहि पुरीतता स्रीहाकर्णशुण्ठाक-
र्णौ प्रकृतिदीर्घावित्येके नौकाशा अनूकाशेन चक्रा-
जरसम्भिग्रकस्तरता सखायः सासह्वानपामार्गाभ-
याद्तऽऋतीहमभीषु सुष्टरीमा जुषाणो यजा देवान्ये-
ना पावकास्वायन्तो यदी सरमा स्वदया सुजिह्व नि-
पद्या दधिष्व सदतना रणिष्ट न भरा चिकित्वान्त्साद-
या गविष्टावबाद्दद्रुद्रचा चायुनक्स्रजा रराणः सादन्य-
मिति च॥ १३० ॥ पिबासोमभित्यादीन्यष्टसप्ततिरूपा-
णि कृतदीर्घाणि निपात्यन्ते । यत्र तु पदद्वयपाठस्त-
त्र यथोक्तं दीर्घः । अन्यत्र तु एकपदस्थः । स्रीहाकर्ण-
शुण्ठाकर्णौ प्रकृतिदीर्घौ । इति चकारोऽनुक्त-
समुच्चयार्थः । तेन यच्छ देवायुवम् । यच्छेति किम् ।
यज्ञपतिं देवयुवम् । पुरीततेति विभक्तिरविवक्षिता ।
पुरीतत् इत्यपि भवति । स्थितोपस्थिते शमिष्वेति
शमिष्व । ममहानऽइति ममहानः । ममहन्तामिति
ममहन्ताम् । अशितमेत्यशितम । रिरिषऽइति रि-

उक्थशब्दात्परः शसेर्ह्रस्वो दीर्घमापद्यते । उक्थशासश्चरन्ति । स्थितोपस्थिते उक्थशसऽइत्युक्थ । शसः ॥ एवाच्छचक्षमाथ ॥ १२७ ॥ एतेषां चतुर्णां ह्रस्वा दीर्घमापद्यन्ते । संहिताऽधिकारादवसाने न । एवा नो दूर्वे । गिरिशाच्छावदामसि । चक्षमा वयम् । अथा नऽइन्द्रः । एवशब्दोऽत्रोपमार्थ एव व्याख्यानात् । अवधारणार्थस्य तु न । तदेव शुक्रम् । सऽएव जातः । अवसाने तु तानो ऽअच्छ ॥ विद्मा सौत्रामण्याम् ॥ १२८ ॥ विद्मेत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रान्वर्जयित्वा । विद्मा तेऽअग्ने । असौत्रामण्यां किम् । विद्म यँ २ ॥ ऽउ च न ॥ अधायत्स्मग्नावायुषु ॥ १२९ ॥ अधेत्ययं ह्रस्वो दीर्घमापद्यते यत्स्मग्नावायु एतान्वर्जयित्वा । अधासपत्नान् । अयाह्यग्ने । अयदित्यादि किम् । अधयत् । अधरस्य ते व्रजनम् । अधग्नाः । अधवायुम् ॥ पिबा सोमं पिबासुतस्य स्थामयो भुवो नूरणे शमीष्व मामह्वानो मामह्नासशीतम रीरिषो रीरिषत यामयन्ति हि छ्मा ते वर्द्धयारयिष्ट भुधीहवञ्चरा सोम स्वयवसिनी श्रोताग्रावाणो धर्षा मानुषः पाथा दिवो युद्ना हि गमया तमः सिञ्चता सुतं परीवापऽउक्था शस्त्राण्यत्ता हवीष्याच्या जानु च्चामारे-

आदिर्दीर्घो निपात्यते अवसाने चेत् । सनवथ पूरुषम् ।
अवसाने किम् । उदेत्पुरुषः ॥ पूष्णो जहीमस्येष्वत्र ॥
१२३ ॥ अत्रेत्ययं ह्रस्वः पूष्णइत्यादिषु त्रिषु दीर्घमापद्य-
ते । अत्रा पूष्णः । अत्रा ते भद्रा ॥ नरः सप्तऽस्तपी-
न्त तऽस्राङ्क्षिन्नियुद्भिष्षु यत्र ॥ १२४ ॥ यत्रेत्ययं ह्रस्वो
नरइत्यादिषु पञ्चसु दीर्घमापद्यते । यत्रा नरः ।
यत्रा सप्तऽस्तपीन् । यत्रा नस्वक्रा । यत्रात-
ऽस्राङ्क्षः । तऽस्राङ्क्षः किम् । यत्र ते ययुः । यत्रा
नियुद्भिः ॥ अभिमातिपृतनासु सपत्नधूर्भिश्वसमत्सुपृ-
तना व्रातेभ्यः सहेः ॥ १२५ ॥ अभिमातीत्याद्यष्टभ्यः
सह धातोर्ह्रस्वो दीर्घमापद्यते । अन्यस्यासम्भवादन-
न्त्यस्य । तत्र द्वयोः प्राप्तौ "सन्निकृष्टविप्रकृष्टयोः स-
न्निकृष्टस्येत्यादेः । अभिमातिषाहः । पृतनासु सास-
हिम् । सपत्नसाही । द्वतं धूर्षाहौ । विश्वासाहस-
वसे । समत्सु सासहः । पृतनाषाह्याय च । व्रातसा-
हाः । स्थितोपस्थिते अभिमातिसह इत्यभिमाति ।
सहः । ससहिमिति ससहिम् । सपत्नसहीति सप-
त्न । सही । धूः सहाविति धूः । सहौ । विश्वसह-
मिति विश्व । सहम् । ससहऽइति ससहः ।
पृतनासह्यायेति पृतना । सह्याय । व्रातसहाऽइ-
ति व्रात । सहाः ॥ उकक्थाश्च शसेः ॥ १२६ ॥

ऽङ्गनम् । मणिग्रन्थाय त्विषीमते । व्यालऽइत्यश्वमी-
मात् । इदं शाखान्तरविषयम् । माध्यन्दिनानान्तु
दीर्घान्नादेश मतुप् । अतएवावान्तःपददीर्घीभाव
इति स्थितोपस्थितं न । अवताव्हउयन्तः । पिवःसि-
न्धस्य । इता मरुतः । हिङ्क्षा नवे । तिष्ठा मरुा-
एसि । रथा सारथिः । स्थितोपस्थिते । त्विषिमतऽइ-
ति त्विषि । मते ॥ विश्वदेव्यसोमौ वत्याम् ॥ १२० ॥
एतौ हसौ वतीशब्दे दीर्घमापद्येते । विश्वदेव्याव
ती । सोमावतीम् । स्थितोपस्थिते विश्वदेव्यवती-
ति विश्व । देव्यवती । सोमवतीमिति सोम । वतीम् ।
वत्यामितिकिम् । सोमवताम् ॥ उषसोभिर्नक्तमीका-
रैकारौकारनकारेभ्यः ॥ १२१ ॥ नक्तोभिरित्यादि-
भ्य ईकारादिचतुर्भ्यश्च पर उष इत्ययं हसो दी-
र्घमापद्यते । प्रकरणानुसारादस्यस्य व्याख्यानात् ।
नक्तोभिः उषासा नक्ता । नक्तोषासा । आवतीमुषा-
सम् । देवीऽउषासौ । उषाकेऽउषासा नक्ता । यो-
नाऽउषासा नक्ता । नऽउषासः । अव्यवहितत्वाभ्य-
मावाद्यवधानेऽपि । स्थितोपस्थिते उषसानक्तेत्युष-
सा । नक्ता । नक्तोषसेति नक्तोषसा । उषसमित्युषसम् ।
उषसावित्युषसौ । उषसऽइत्युषसः । एतेभ्यः किम् । अ-
ग्नऽउषसाम् ॥ पूरुषोऽवसाने ॥ १२२ ॥ पूरुष इत्ययं

पनय सादयर्ज्जु हृषयन्तु सखच्छाघाघारात्यृतभवता यकारे ॥ ११५ ॥ अयादयश्चतुर्दश ह्रस्वा यकारे दीर्घमापद्यन्ते । मह्यमꣳ अयाय । उशारिया यज । वृहच्छोचा यविष्ठ्य । पनया युजम् । सादया यज्ञ-म् । ऋजूयताम् । हृषायमाणः । शत्रूयतो हन्ता । सखच्छा यत् । आघाये । अघायतः । अरातीयतः । ऋतायते । स्थितोपस्थिते तु अयेति अयय । ऋजुयतामित्यृजु । यताम् । हृषयमाणऽइति हृ-ष । यमाणः । शत्रुयतऽइति शत्रु । यतः । अघयत-ऽइत्यघ । यतः । अरातियतऽइत्यराति । यतः । ऋ-तयतऽइत्यृत । यते ॥ वृषघृजोः ॥ ११६ ॥ व इत्ययं हृघहृजोर्दीर्घमापद्यते । वाहृधे । प्रवाहृजे । स्थितो-पस्थिते वहृधऽइति वहृधे । वहृजऽइति वहृजे ॥ अद्य तꣳ ह्वकारचकारभवत हृणीमहे देवेषु ॥ ११७ ॥ अद्येत्ययं तमित्यादिषट्सु दीर्घमापद्यते । अद्यातम-स्य । तमिति किम् । अद्य तेऽअपरम् । अद्याह्नवे-म । हवमद्या च । अद्या भवत । अद्या हृणीमहे । अद्यादेवाः ॥ न होतरि ॥ ११८ ॥ अद्येत्ययं न होतरि दीर्घमापद्यते । अद्य होतारम् ॥ शृणुत त्विषि धजि भवत पिबेत स्म तिष्ठ रचामकारे ॥ ११९ ॥ शृणुता-दिनव ह्रस्वा मकारे परे दीर्घमापद्यन्ते । शृणुता म-

ष्टङ्गाः । प्रयासायेति प्र । यासाय ॥ धारयाम योजा-
व सचस्व नुद मोषु जयतोरुष्य रच यज यच्छ म-
त्स्वथ पिष्टत गायता तु येन नकारे ॥ १०९ ॥ धारया-
मेत्यादयः षोडशह्रस्वा नकारे दीर्घमापद्यन्ते । धार-
यामा नमोभिः । योजान्विन्द्र । अवानो देव्या धि-
या । सचस्वानः स्वस्तये । प्रणुदानः । मोषूणः । मो-
षु किम् । ऊर्ध्वऽऊषुणः । जयता नरः । उरुष्याणः ।
रक्षाणः । यजानो मित्रावरुणा । यच्छानः शर्म्म ।
मत्स्वथा नो विभ्रम् । पिष्टतानिरवह्वयात् । गायता
नरः । आतूनः । आतुकिम् । तु चेतुनो भवन्तु । ये-
ना नः पूर्व्वे ॥ भव च ॥ ११० ॥ अयं ह्रस्वो दीर्घमाप-
द्यते नकारे परे । भवानः ॥ सचावरूत्थ्यवाजस्य
पायुषु च ॥ १११ ॥ भवेत्ययं ह्रस्वस्सचादिषु चतुर्षु
दीर्घमापद्यते । भवासचा । भवा वाजस्य । भवा पा-
युः ॥ नावनयामि ॥ ११२ ॥ अवेत्ययं ह्रस्वो नयामि-
शब्दे परे न दीर्घमापद्यते । अवनयामि ॥ अष्टकृत्त्वः
सौ ॥ ११३ ॥ उकारः सौ परे दीर्घमापद्यते । मह्रीमू
षु ॥ रथितकारनकारयोः ॥ ११४ ॥ रथीत्ययं ह्रस्वस्त-
कारनकारयोर्दीर्घमापद्यते । रथीतमम् । रथीनाँव्वा-
जानाम् । स्थितोपस्थिते रथितममिति रथि । तम-
म् । रथिनामितिरथि । नाम् ॥ अथोदारियशोच

रविश्वत्रसहत्रवाजयन्तेषु । १०४ । अभीत्ययं ह्रस्वो वि-
क्खेत्रजित्यादिषट्सु न दीर्घमापद्यते । अभि विक्खये-
षम् । अभि वीरोऽअभिसत्वा । अभि विश्वे गृण-
न्तः । अभि वत्सन् । अभिहत्रम् । अभिवाजयन्तः ॥
अश्वस्य वाजिन इति च । १०५ । अश्वस्येति ह्रस्वो
वाजिन इत्येतस्मिन्परे न दीर्घमापद्यते । अश्वस्य
वाजिनः । इति चेत्येवं विधान्योदाहरणसूचनार्थ-
म् । तेनाधिवक्तेति न दीर्घः ॥ विश्वसहभुवपुषवसु-
षु । १०६ । नेति नानुवर्त्तते । विश्वेत्ययं ह्रस्वः सहा-
दिषु चतुर्षु दीर्घमापद्यते । विश्वासाहमवसे ।
विश्वानराय विश्वाभुवे । उत विश्वापुषम् । ग-
न्धर्वस्त्वा विश्वावसुः । स्थितोपस्थिते तु । विश्व-
सहमिति विश्व । सहम् । विश्वभुवऽइति विश्व ।
भुवे । विश्वपुषमिति विश्व । पुषम् । विश्ववसुरि-
ति विश्व । वसुः ॥ तिष्ठाद्युदात्तम् ॥ १०७ ॥ आद्यु-
दात्तं तिष्ठेतिपदं दीर्घमापद्यते । तिष्ठा रथमधिय-
म् । तिष्ठा देवो न सविता । आद्युदात्तं किम् । आ-
तिष्ठ वृत्रहन् ॥ प्रवत्सुक्तयाक्षेषु ॥ १०८ ॥ प्रेत्ययं
ह्रस्वो वनादिषु त्रिषु दीर्घमापद्यते । प्रावभिः स-
जोषसः । प्राक्षक्ता साक्षेन्द्राः । प्राचासाय । स्थितो-
पस्थिते प्रवभिरिति प्र । वभिः । प्रक्षक्ताइति प्र ।

वकारे । १०२ । एते पञ्चविंशतिर्ह्रस्वा दीर्घमाप-द्यन्ते वकारे परे । अश्वावतीम् । रश्मीवतीम् । मतीविदे । सुमतीवृधः । श्वाविद्भौमी । सुतावतः । चारयाष्टवन् । सेदिमावयम् । इन्द्रियावान् । धार-याव्वहूनि । चित्रावसो । भङ्गुरावताम् । वयुनावि-देकः । अश्वस्याविग्रह्ला । ऋतावानम् । अभीवर्त्तः । शवतावचः । अधीवासम् । अग्नी विश्वानराय । शक्ती-वन्तो गभीराः । इमाऽभत्वा पुरूवसो । स्थितोपस्थिते तु अश्ववतीमित्यश्व । वतीम् । रश्मिवतीमिति रश्मि-वतीम् । मतिविदऽइतिमति । विदे । सुमतिवृधऽइ-तिसुमति । वृधः । श्वविदितिश्व । वित् । सुतवतऽइति सुत । वतः । इष्टिवानिति इष्टि वान् । इन्द्रियवानि-तीन्द्रिय । वान् । चित्रवसोऽइति चित्र । वसो । भङ्गु-रवतामिति । भङ्गुर । वताम् । वयुनविदिति वयुन । वित् । हृदयविधऽइति हृदय । विधः । ऋतवानमि-त्यृत । वानम् । अभिवर्त्तऽइत्यभि । वर्त्तः । अधिवास-मित्यधि । वासम् । शक्तिवन्तऽइति शक्ति । वन्तः । पुरुवसोऽइति पुरु । वसो । शचीवसो । अन्यशाखीय-मिदमुदाहरणम् ॥ नाश्वयद्धिरण्यात् । १०३ । हि-रण्यमच्छब्दात्परअश्वइति शब्दरूपं यदित्येतस्मिन्परे न दीर्घमापद्यते । हिरण्यमश्वयत् ॥ शो भनिकखयेषु वी-

नुवाक्याभिःपुरोऽनुवाक्याश्चत्वम्मित्तम् । ९७ । एतान्य-
ष्टौ निपात्यन्ते । इन्द्राग्न्योरुज्जितिम् । इन्द्रायाहिचित्र-
भानो सुताः । इन्द्रस्य वार्त्रघ्नमसि । दुःष्वप्न्यर्ठ० सुव । ध्रुवक्षितिर्ध्रुवयोनिः । ऋचः पुरोऽनुवाक्याभिः ।
पुरोऽनुवाक्याभिः । पुरोऽनुवाक्यायाज्याभिः । साह्ने-
भ्यश्चत्वम्मित्तम् ॥ तवर्गे च । ९८ । ऋषरेभ्यः परो
नकारः प्रकृत्या पवर्गे परे । तृम्पन्तु होत्राः । अवक्र-
न्देन तालु । क्रन्दते ॥ षादनन्तरऋकारे । ९९ ।
षात्परो नकारः प्रकृत्या ऋकारे परे । उग्रस्त्वेष नृ-
म्णः ॥ निषत्ताय रथवाहनमिन्द्रऽएणं परिणीय-
ते समिन्द्रणऽउरुष्याणो रक्षा णः षुणः षूणःषुणा स
ख्या स्वर्णस्थूरिणौ प्रणऽआयूंषि । १०० । एता-
नि त्रयोदश निपात्यन्ते । निषत्ताय । रथवाहनम् ।
इन्द्रऽएणम् । परिणीयते कविः । समिन्द्र णो मन-
सा । उरुष्याणोऽअघायतः । रक्षाणो ब्रह्मणस्पते ।
मोषूणऽइन्द्र । अभीषुणः । गोमदूषुणा सख्या । स्वर्ण
घर्मः । अस्थूरिणौ । निसन्नायेतिनि । सन्नाय । रथ-
वाहनमितिरथ । वाहनम् । इति णत्वप्रकरणम् ॥
दीर्घम् । १०१ । अधिकारोऽयम् ॥ अश्वरश्मिस्य मति
सुमति चारय इषिरेदिमेन्द्रिय धारय चित्रभङ्कुर-
वयुनाश्वस्य हृदयवृष्ण्यत्तीम्यवताध्यर्वशक्ति पुरुश्चन्द्र-

ष्मीन् । अनयासिसीष्ठाः । इतिषत्वप्रकरणम् । ऋषरे-भ्यो नकारो णकारं० समानपदे, स्वरयवहकपैश्च । ६१ । ऋकारषकाररेफेभ्यः परः स्वरयकारवकारह-कारकवर्गपवर्गव्यवहितोऽपि नकारो णकारमापद्यते समानपदे । तस्मादित्युत्तरस्येत्युक्तत्वाद्यवधाने अप्राप्तवचनादेतैर्व्यस्तैर्यथासम्भवमिलितैश्च व्यवाये भव-ति नान्यैः । नृमणाः । पुरीषवाहणः । स्थितोपस्थिते तु नृमनाऽइति नृ। मनाः। पुरीषवाहनऽइति पुरीष। वाहनः । प्रवाहनऽइति प्र। वाहनः।एतैः किम्। र-श्मिना । रसेन । रुचानः । रथेन ॥ प्रनेति नुदाति ह्निनोमीनाम् । ९२ । प्रेत्यस्मान्नीनुदधात्वोर्हिनो-मिशब्दस्य च नकारो णकारमापद्यते । प्रणय देवा-व्यम् । प्रणुदानः । प्रहिणोमि ॥ प्रकृत्या पदा-न्तीयः । ९३ । पदान्तीयो नकारः प्रकृत्या भव-ति । पूषन् । अक्रन् । पितॄन् ॥ निवनिन-सः प्रपीनम् । ९४ । ऋषरेभ्यो निवनिनसइत्येषां प्रपीनमित्ययं नकारः प्रकृत्या । भूम्ना बभ्रुनीका-शाः । ब्रह्मवनि त्वा क्षत्रवनि । वार्ध्रीनसस्ते । प्रपी-नमग्ने ॥ श्रीमनाऽइत्येके । ९५ । एकशब्दो मुख्य-वाची । अयं च निपात्यते । श्रीमनाः शतपयाः ॥ इ-न्द्राग्नी चित्रभानो वार्त्रघ्नन्दुःष्वान्यं प्रुवयोनिः पुरोऽ-

ठँ॰सीरि "त्यञ्चानुस्वाराच्चेति" प्राप्तिः । ऋक्सामेति द्वये "वारेफाभ्यां चेति"। तित्तिरिस्ते सर्पाणामित्यत्र 'सकारपरे चेति'। अन्यत्र समानपदत्वात्। चतुस्त्रिठँ॰ शदिति किम् । घर्मश्चतुष्टोमः । अत्र 'लुङ्सुदीति' विसर्गलोपे 'भाविभ्य' इति षत्वं भवति । वीर्य्यं पुत्रोऽनुसन्तुनोतु । बृहस्पतिसुतस्य । सुसमिद्धाय, सुसन्दृशन्त्वा । अभिसत्त्वा सहोजाः । देवाऽअभिसञ्चिशन्तु । सुसस्याः कृषीस्कृधि । अतिस्थूलं चातिकृशम् । उलूखलमुसले । शँय्युना पत्नीसँय्याजान् । पुञ्जिकस्थला च क्रतु स्थला । शितिकक्षोञ्जिसक्थः । बृहता हविसृष्टशा । भद्रद्रठँ॰ हृरिसृशम् । एनठँ॰ हिरठँ॰सीः । ऋक्सामयोः शिल्पे । ऋक्सामाभ्याऽसन्तरन्तः । तित्तिरिस्ते सर्पाणाम् । सीसेन तन्त्रम् । हरिणीः सीसाः । सीसञ्च मे । प्रजासनिपशुसनि । गोसनि । प्रति सदृङ् । प्रतिसदृङ्चासऽएतन। चतुस्त्रिठँ॰ शदृङ्गाजिनः॥ ऋकारेफाच्च द्वयस्य।८९। ऋकारो रेफऽअर इत्येतत्त्रयपरः सकारः प्रकृत्या । तिसृभिरस्तुवत । तिस्रश्च मे। व्वाचो व्विसर्जनम्॥ पृथिवि दिव्युपरिचर्मणिशकुनियासिभ्यः।९०। एतेभ्यः षड्भ्यः सकारः प्रकृत्या । पृथिवि सदन्त्वा। दिवि सदन्त्वा। उपरि सदो दुवस्वतः । चर्मणो सहाव्विस्तु । शकुनि सादेन कृ-

भाविपूर्वादप्राप्ते विधिः ॥ सधिरर्ठं॰शुरदितिः । ८३ । एतेषां त्रयाणां सकारः षकारमापद्यते । अ-ग्नाविन्द्रे सधिष्टुव । अर्ठं॰शुरर्ठं॰शुष्टे । अदिति-ष्टे ॥ वायुरग्निरन्नेरेकाक्षरे । ८४ । एतेषां त्रया-णां सकारः एकाक्षरे पदे षकारमापद्यते । वायु-ष्ट्वा पचतैः । अग्निष्टेऽधिपतिः । अग्नेष्ट्वा तेज-सा । एकाक्षरे किम् । अग्निस्तिग्मेन । अग्नेस्त-नूः ॥ सकारपरे च । ८५ । भाष्युपधः सकारः स-कारे परे एकाक्षरे पदे षकारमापद्यते । अवतत्य धनुष्ट्वम् । सकारपरे किम् । सवितुस्त्वा प्रसवे ॥ मातृभिरर्चिर्भिः पायुभिर्वरूत्रीः । ८६ । एतेषां चतुर्णां सकारः षकारमापद्यते । सर्ठं॰ सृज्य मातृभि-ष्ट्वम् ॥ शिवेभिरर्चिभिष्ट्वम् । अदब्धेभिः सवितः पा-युभिष्ट्वम् । वरूत्रीष्ट्वा॥ प्रकृत्या नानापदस्थे तका । ८७ । अधिकारोऽयम् । अनु सन्तनोतु बृहस्प-ति सुतस्य सुसमिद्धाय सुमन्त्वमभि सत्वाऽभिसँव्वि-शन्तु सुसस्याऽअतिस्थूलम्मुसले पत्नी सँय्याजान् क्र-तुस्थलाभ्रिसक्थ्यो दिविस्पृशा हृदिस्पृशर्ठं॰ सीर्षट-कसामाभ्यां तित्तिरिस्ते सीसेन सीसाः सीसं पशुस-नि गोसनि प्रतिसदङ् प्रतिसदद्यासश्चतुस्त्रिर्ठं॰ शत् । ८८ । एते षड्विंशत्सकाराः प्रकृत्या भवन्ति । हि-

र्म्मियोदयः। ७५। ह्वेः परीभूतो सकारपरस्सकारपरश्च सकारः षकारमापद्यते। अस्ति ह्विष्मते। आपो हि ष्ठ॥ द्यवेश्च। ७६। द्यविशब्दात्परस्सकारोदयः सकारः षकारमापद्यते। मकारस्त्वसम्भवान्न सम्बध्यते। उपद्यविष्ठ॥ नेस्त्यास्तनोः। ७७। निशब्दात्परस्त्यास्तन्योर्धातोः सम्बन्धिसकारः षकारमापद्यते। निःस्त्यायताम्। निः स्तनिह्नि इति स्थिते "लुङ्सुदि जित्परे" इत्यनेन विसर्गलोपे कृते सस्य षः। आप्यायतान्निष्ट्यायताम्। निष्टनिह्नि॥ ततथौ। ७८। नि इत्यस्मात्परः सकारः षकारमापद्यते ततथौ परे। तथयोरिति सस्य षः। स्वधया निष्टतनुः॥ अनोः स्तुवन्त्याम्। ७९। अनोः परः स्तुवन्ति सकारः षकारमापद्यते। अनुष्टुवन्ति पूर्व्वथा॥ दुःष्वप्न्यम्। ८०। इदं कृतषत्वं निपात्यते। दुःष्वप्न्यर्ठं० सुव। स्थितोपस्थिते दुःस्वप्न्यमिति दुःस्वप्न्यम्॥ वन्द्वारुस्त्रोकिः। ८१। एतयोः सकारः षकारमापद्यते। इह यानि विसर्गान्तानि पदानि तेषां तथयोरिति सत्वे जाते षः। गृणाति व्वन्द्वारुष्टे। माकिष्टे व्व्यथिरादधर्षीत्॥ सहेः पृतनायाः। ८२। पृतनाशब्दात्परः सहेः सकारः षकारमापद्यते। पृतनाषाह्याय च। स्थितोपस्थिते पृतनासह्यायेति पृतना। सह्याय। अ-

नुस्वाराच्च तत्पूर्व्वात् ॥ ६५ ॥ भाविपूर्वादनुस्वारात्परः सकारः षकारमापद्यते । तपूꣳष्यग्ने । पुरोडाशैर्हवीꣳष्या । तत्पूर्वात्किम् । वामनाꣳसि ॥ करेफाभ्यां च ॥ ६६॥ ककाररेफाभ्यां च परः सकारः षकारमापद्यते ऋक्षु । वनर्षदः । अनुस्वारात्ककाराच्च परस्य षत्वं व्याकरणसिद्धम् । अत्र लेखनं तु हिठ० सीर्ष्टकसामयोरित्यादिनिषेधस्य वक्ष्यमाणत्वात्प्राप्तिप्रदर्शनार्थम् ॥ नेः सीदतेः ॥६७॥ नेः परः सदधातोः सकारः षकारमापद्यते । एदं बर्हिर्निषीदत ॥ससाद च॥६८॥ नेः परः ससादेति सकारः षकारमापद्यते । एतस्य सदधातुजत्वात्स्पष्टार्थम् । निषसाद धृतव्रतः ॥ ओकारात्सु ॥ ६९॥ ओकारात्परः सुसकारः षकारमापद्यते । मोषूणः ॥ उश्चाष्टकात् ।७०। अष्टकादुकारात्परः सुसकारः षकारमापद्यते । ऊर्द्ध्वऽऊषुणः ॥ अभेस्तु ।७१। अभेः परः सुसकारः षकारमापद्यते । अभीषुणः ॥ परेश्च सिञ्चतेः । ७२ । परेः परः सिञ्चतेः सकारः षकारमापद्यते । परिषिञ्चन्ति ॥ अभेश्च । ७३ । अभेः परः सिञ्चतेः सकारः षकारमापद्यते । मित्रावरुणावभ्यषिञ्चन् ॥ वेर्य्युदयः । ७४ । वेः परीभूतो यकारपरः सकारः षकारमापद्यते । विष्यास्स्यायुषो न मद्यात् । युदयः किम् । विस्वः पश्य ॥ हे-

पराय॥ तद्बृहतौ करपत्योस्तलोपश्च ॥५९ ॥ तत् बृहत् एतौ करपतिशब्दयोः प्रत्यययोर्यथासङ्ख्यं सकारेण व्यवधीयेते। पूर्वपदयोश्च तकारलोपो भवति। यथा तत् करान् । तस्क राँऽ२ ॥ उत। बृहत् पतिः ॥ बृहस्पतिः। परिष्कृते षकारेण॥६०॥ परीत्ययं कृते परे षकारेण व्यवधीयते। परिष्कृताः शुक्राः । स्थितोपस्थिते तु परिष्कृताऽइति परि। कृताः ॥ चन्द्रे सुशकारेण॥ ६१ ॥ सुशब्दः चन्द्रे परे शकारेण व्यवधीयते। उभेसुश्चन्द्र । स्थितोपस्थिते सुचन्द्रेति सु चन्द्र ॥ दुधुक्षन्धो दकारम् ॥ ६२ ॥ दुधुक्षन्नित्ययं धकारो दकारमापद्यते । बृहतीन्दुदुक्षन् । स्थितोपस्थिते दुधुक्षन्निति दुधुक्षन् ॥ भाविभ्यः सषर्ठ० समानपदे॥ ६३ ॥ भाविभ्यः परः सकार एकपदे विद्यमानः षकारमापद्यते ॥ वात्तथौ मूर्द्धन्यम् ॥६४॥ षकारात्परौ तथौ मूर्द्धन्यमापद्यते । व्रजञ्च गोष्ठानम्। परमेष्ठ्यभिधीतः। अग्ने दुष्टरा सुषाव । भुवना सीषधाम । दुष्टरस्तरन्। तकारस्य टकारः। जित्सञ्ज्ञकत्वात्सोष्मत्वाच्च थस्य ठः। स्थितोपस्थिते तु । गोस्थानमिति गो । स्थानम् । परमेस्थीति परमेस्थी। दुस्तरऽइति दुः। तरः । सुसावेति सु । सावा। सीसधामेति सीसधाम । तस्मादित्युत्तरस्यत्यव्यवहितस्य। तेन प्रेषित इत्यत्र तकारस्य मूर्द्धन्यो न॥ श्च-

ह भगवान्महर्षियाज्ञवल्क्यः ॥

ह्कारो नैव मन्तव्यइति शास्त्रव्यवस्थितिः । इति वचनात्तत्स्वराग्रे तादृशस्वरानुकूलो विसर्गउच्चारणीयो न ह्कारसदृशइत्युच्चारणकर्तृशासनाद्यवस्था बोध्या ॥ तश्चाघादनाडम्बरात् ॥ ५५ ॥ आघाशब्दात्परस्तकारो मूर्द्धन्यमापद्यते । स चेदाघाशब्दश्चाडम्बरशब्दात्परो न । दार्वाघाटः । जित्सञ्ज्ञकत्वादसोष्मत्वाच्च टः । स्थितोपस्थिते तु दार्व्वाघातऽइतिदारु । आघातः । अनाडम्बरादिति किम् । शब्दायाडम्बराघातम् ॥ वनसदोऽवेटो रेफेण ॥ ५६ ॥ वनशब्दः सदशब्दे परे रेफेण व्यवधीयते वनशब्दो वेटशब्दात्परोन चेत् । भुरण्यवो वनर्षदो वायवः । स्थितोपस्थिते वनसदऽइति वन । सदः । अवेटः किम् । अप्सु षदे वेड्वनसद्दे ॥ पत्यौ च सकारेण ॥ ५७ ॥ वनशब्दः पतिशब्दे सकारेण व्यवधीयते । वनस्पतिः शमिता देवः । इदं शाखान्तरविषयम् । अत्र लेखनं तु सकारेणेत्यनुवृत्तिप्रदर्शनार्थः ॥ ऋतावरौ च पतिपरयोः ॥ ५८ ॥ ऋत अवर एतौ पति परयोः सकारेण व्यवधीयेते । तव वायवृतस्पते । तूणवद्भ्यःअसवरस्पराय । स्थितोपस्थिते तु ऋतपतऽइत्यृत । पते । अवरपरायेत्यवर ।

५० । अहरित्ययं विसर्गः पतिशब्दे परे रेफमापद्यते । समानपदइत्यस्यापवादः । अहर्पतये । स्थितोपस्थिते तु अहः पतयऽइत्यहः । पतये ॥ परस्य मूर्द्धन्यम् ॥ ५१ ॥ अधिकारोऽयम् । परस्येति तऽश्राद्यादनाडम्बरादित्यस्मात्प्राक्मूर्द्धन्यमिति तमभि व्याप्य ॥ स्वर्धूः साᳫंसहयोः ॥ ५२ ॥ स्वः धूः इमौ यथा संख्यं साम् सह इत्येतयोः रेफमापद्यते, परस्य मूर्द्धन्यम् । स्वर्षामष्षाम् । इतं धूर्षाहौ ॥ "विकारी यथासन्न"मिति ईषद्विष्टतत्वात्षकारः । स्थितोपस्थिते स्वः सामिति स्वः । साम् । धूः सहाविति धूः । सहौ ॥ उकारन्दुदूर्द्दे ॥ ५३ ॥ दुरित्ययं विसर्जनीयः उकारमापद्यते परस्य मूर्द्धन्यम् । विसर्ज्जकत्वाद्घोषत्वान्निरनुनासिकत्वाच्च उकारः । परिते दूडभः । स्थितोपस्थिते दुद्दर्दभऽइतिदुः । दभः । अध्यायइत्युक्तत्वादुपस्थिते "रेफᳫंस्वरघा"विति भवति, स्थिते तु न संहिताया अभावात् ॥ ओकारमितः सिञ्चतौ सोपधः ॥ ५४ ॥ इत इत्ययं विसर्गः पूर्ववर्णसहित ओकारमापद्यते सिञ्चतौ परे परस्य मूर्द्धन्यम् । परीतो षिञ्चता सुतम् ॥ इति विसर्गसन्धिकार्यम् ॥

## अथ विसर्गाङ्गुलिप्रदर्शनप्रकारमा-

षत्वात्पूर्वं सूत्रेण षकारे प्राप्ते विधिः। क्रुधीष्कृधि॥ सदो द्योर्न्नमस्कृतं पितापथेषु। ४६। सदइत्यादीनां त्रयाणां विसर्गः कृतमित्यादिषु यथायथं सं षं चापद्यते। येषामस्तु सदस्कृतम्। उपस्कृतो द्यौष्पिता। शम्मे सप्रथा नमस्पथे॥ पतितालव्यस्वरोदये, पदे च। ४७। तालव्यस्वरान्ते पतिशब्दे पदरूपे परे विसर्गः सकारमापद्यते। तालव्यस्वरोदयइति स्वग्रन्थाभिप्रायम्। नस्त्वायस्पते। वाचस्पतये। वाचस्पतिम्। पदे किम्। "तस्मिन्निति निर्दिष्टे" इतिसप्तमीनिर्दिष्टवर्णविषयम्। अत्र चेदमेव ज्ञापकं पदावयवे व्यवस्थितस्यासम्भवात्। यतो जातः प्रजापतिः॥ न परुषः परुषि। ४८। परुषइत्ययं विसर्गः परुषि न सकारमापद्यते। "समानपदे चे"ति प्राप्तस्य निषेधः। प्ररोहन्तो परुषः परुषः॥ वाजपतिर्वास्ऽएदिधिषुरन्तःपर्श्व्येनान्तःपार्श्व्यमिति च। ४९। कपयोर्व्वाजपतिरित्यादीनां त्रयाणां विसर्गो अन्तःपर्श्व्येनेत्यादिपदद्वयसम्बन्धी च न विकारमापद्यते। वाजपतिः कविः, "कविः कर"-दित्यस्य निषेधः। वास्तःपत्नीम्। एदिधिषुःपतिम्। अन्तः पर्श्व्येन। अन्तः पार्श्व्यम्। "समानपदे चे"ति प्राप्तस्य निषेधः। इति चेति अनुक्तसमुच्चयार्थं तेन ज्ञातः पतिरित्यत्र न सकारः॥ अहः पतौ रेफम्।

रयोः सकारमापद्येते । रायस्पोषे । सहसस्पुत्र ॥ तम-
सोऽरस्तात् । ३८ ॥ कपयोरयं विसर्गः समापद्यते पर-
स्ताच्छब्दं वर्जयित्वा । तमसस्परि । अपरस्तात्किम् ।
तमसः परस्तात् ॥ नमसमूर्द्धिव्याम् । ३९ । इयं समा-
पद्यते पृथिवीशब्दे । तपसस्पृथिव्याम ॥ अद्भ्नो रजसो
दिवस्पातस्यातौ । ४० । एते चत्वारः पाद्यान्तौ सकार-
मापद्यन्ते । अद्भ्नस्पातु । रजसस्पाति । दिवस्पातिह
सहस्पृथस्पाहि ॥ अद्भ्नस्कुर्व्वितिच । ४१ । एतन्निपा-
त्यते । सकारो ॥ अद्भ्नस्कृत ॥ समानपदे च । ४२ ।
एकपदे विद्यमानो विसर्गः कपयोर्यथाक्रमं सकारं ष-
कारं चापद्यते इतौ परे चरीयां च न ॥ श्रेयस्कर ।
तपस्पतिः । हविष्कृत् । चतुष्पात् । स्थितोपस्थिते ।
श्रेयः करोति श्रेयः कर । तपः पतिरिति तपः । पतिः ।
जातपत्यमितिजाः । पत्यम् । हविष्कृदिति हविः कृ-
त् । चतुःपादिति चतुः । पात् । इत्यादि भवति ॥ प-
रावत्रमाने । ४३ । अत्रमानस्थिते परिशब्दे परे विसर्गः
समापद्यते । श्रोत्रयस्परि । अव्रमाने किम् । हेडः प-
रि ते दृशात् ॥ कविः करत्कधिषु । ४४ । एतेषु विसर्गः
कृतिशब्दे सकारं षकारं चापद्यते । वसुस्कर्वः । अदस-
स्कर । पुनस्कृत्व ॥ कृपोश्च कृधौ सकारम् । ४५ । कृ-
पोरित्ययं विसर्गः कृधिशब्दे सकारमापद्यते । भाव्युप-

षयोरयं निषेधः । अध्याये इत्यधिकारोऽवध्यर्थम् । ऋधि-
षाः कम् । तवत्तानितितवः । ततम् । इत्यादौ "तथ-
योः स" इत्यादि भवति । अध्याये किम् । गोऽच्छति
गो । अच्छत् । इत्यादौ "स्वरे भावी" त्यादि भवति ।
अयं निषेधो विकारवतः पदस्यैव स्थितोपस्थिते ना-
न्यत्र तेन रायस्पोषदा इति रायस्पोष । दे । अत्र रा-
यः सहस इति सकारो भवति ॥ इति वच्चविराम ।
३२ । पुनरुच्चारितं चर्चा । इतः परं पदं तत्र इतौ पदे
यथा न भवति तद्वदेव ॥ ककारपकारयोः सकारम् ।
३३ । भाव्यभावः षकारम् । ३४ । भाव्युपधो विसर्गः ष-
कारमापद्यते । परिशेषात्कवर्गपूर्वः सकारः ककारे च
परे । अधिकारोऽयम् । उत्तरसूत्रेषु यथायोग्यमुभयोः
सम्बन्धः ॥ अविर्निरिड इडाया वसतिर्व्विरिवः । ३५ ।
एतेषां षण्णां विसर्गः ककारपकारयोर्यथायथं सकारं
षकारं चापद्यते । आविष्कृणुष्व । अस्वनिष्पर । इड-
स्पदे इडायास्पदम् । व्यसतिष्कृता । व्विरिवस्कृणोतु ॥
दिवो ककुत्पृष्ठिव्योः । ३६ ॥ दिव इत्ययं विसर्गः कप-
योः सकारमापद्यते ककुत्पृथिवीशब्दौ वर्जयित्वा । दिवस्प-
रि । दिवस्पृथाय । दिवस्पृष्ठे । अककुदित्यादि कि-
म् । दिवः ककुत् । दिवः पृथिव्याः ॥ रायः सहस-
स्पोषपुत्रयोः । ३७ । एतौ यथासङ्ख्यं पोषपुत्रयोः प-

छरवन्ति, ततः खनेम । व्रतो : पवित्रम् । यः फ-
ल्गिनोः ॥ तस्मिँल्लघ्हजिह्वामूलीयोपध्मानीयनासिक्या
न सन्ति माध्यन्दिनानाम् । २४ । इति पाणिनीयसूत्रैः
प्राप्ताः प्रतिषेधा बोध्याः ॥ लुङ्सुदि जित्परे । २५ ।
जित्स ञ्जके परे सुत्स ञ्जके च परभूते विसर्गो लुप्यते ।
घन्नतासुताः । ऊर्ज्जस्त्व ॥ उपवसने पीवः । २६ । अयं
विसर्गो लुप्यते उपवसने परे । पीवोऽवसनानाम् ॥ स-
श्चोऽषधीमयोः । २७ । स इति विसर्गो लुप्यते ओषधी-
शब्दे इमशब्दे च परे । सौषधीरनु । सेमान्नः ॥ व्यञ्ज-
ने च । २८ । सइत्ययं विसर्गो लुप्यते व्यञ्जने परे । स
ते लोकः स पर्य्यगात् । स बोधि ॥ स्य एष च । २९ । स्यः
एषः इमौ विसर्गौ लुप्येते व्यञ्जने परे । स्यरात्थ्यः ।
एषते । एषच्छागः ॥ स्य व्याजी । एषस्य । इदं सूत्रद्वयं
"तयोः स"मित्यादीनां बाधकम् । स्य व्याजी स बोधी-
त्यादौ "सर्वो ऽः कार ओकार"मित्यनेन पूर्वान्विधीन्बा-
धन्ते नोत्तरानिति न्यायेन "विप्रतिषेधऽउत्तरम्बलव-
दलोपे" । ३० । इत्युक्तत्वादेतस्य बाधो मध्येऽपवादः प्रा-
प्तः अलोप इत्युक्तत्वान्न भवति ॥ अनितावध्याये । ३१ ।
अधिकारोऽयम् । विधीयमानमागमविकारादिकार्यमितौ
परे न भवति । उपस्थितं विना इति परत्वासम्भवात् ।
स्थितोपस्थितस्य तु एकविषयत्वादन्तःपदविकारागमवि-

निषेधः ॥ कण्ठ्यपूर्वो यकारमरिफितः । १४ । रिफित-
भिन्नः कण्ठ्यपूर्वो विसर्गो यकारमापद्यते स्वरे परे ।
यऽइमा विश्वा । शुष्माऽओषधीनाम् । यवयोरिति
लोपः ॥ लोपन्धौ । १५ । अरिफितः कण्ठ्यपूर्वो विसर्गो
लोपमापद्यते धौ परे । देवा देवैः । अयच्छा मा ॥ भूमे-
श्चाकारेऽष्टक्ले । १६ । भूमिशब्दसम्बन्धी विसर्गो लोप-
मापद्यते अष्टक्लाकारे परे । भूम्याददे ॥ सर्वो अकार ओ-
कारम् । १७ । ह्रस्वाकारपूर्वो अरिफितो विसर्गः सोपध
ओकारमापद्यते धौ परे । "लोपं धा" वित्यस्यापवादः ।
देवो देवैः, देवो वः सविता ॥ अकारे च । १८ । अरि-
फितो ह्रस्वकण्ठ्यपूर्वो विसर्गः सपूर्व ओकारमापद्यते
अकारे परे । स्तुपोऽसि । कृष्णोऽसि ॥ स्वोरुह्नावह्नश्च
रात्र्याम् । १९ । स्वरित्ययं रुह्ने अह्नरित्ययं रात्रिशब्दे
परे सपूर्व ओकारमापद्यते । स्वोरुह्नाणाः । अहोरा
त्रयोः ॥ चछयोः शम् । २० । विसर्गश्चछयोः शमापद्यते ।
इन्द्रश्च । प्रजापतिश्छन्दः ॥ तथयोः सम् । २१ । विसर्ग-
स्तथयोः समापद्यते । कस्त्वा । नमस्ते ॥ ऋविका-
र्ष्ठ० शाकल्यः शषसेषु । २२ । एषु विसर्गो विकारन्ना-
पद्यते शाकल्यमतेन । वायव्याः श्वेताः ॥ अग्नीषोमयोः
षष्ठो । व्यानस्पस्त्यः ॥ प्रकृत्या कखयोः पफयोश्च । २३ ।
कखयोः पफयोश्च परयोर्विसर्गः प्रकृत्या भवति । सिमाः

स्वरच्छकारे चकारेण सर्वत्र। ८। स्वरः छकारे परे चकारेणागमिकेन स विधीयते पदादिमध्यान्तेषु। अच्छावाकमसि। माच्छन्दः। जगतीच्छन्दः॥ यच्छातिच्छायमच्छेति न। ९। तेषाम्। बृहच्छन्दसः। अतिच्छायच्छिद्रा, यस्य छाया। ङ्णौ न्ताभ्यां सकारे। १०। ङकारणकारौ यथासङ्ख्यं ककारटकाराभ्यां व्यवधीयेते सकारे परे॥ प्राङ्क्सोमः। समुद्राण्ट्सम्प्रपत्। उदस्तभाने लोपम्। ११। उदः परः स्तभानशब्दीयसकारो लोपमापद्यते। उत्तभान। “तस्मादित्युत्तरस्य” इत्यादिसूत्रेणाप्यर्थसिद्धत्वात्। उद्ग्रहणमत्रानेत्यत्र न सकारलोपो भवति। भाव्युपधस्य रिफितस्य जीयो, रेफे लुप्यते दीर्घश्चोपधा। १२। भाविकञ्चोपधो रिफितस्य विसर्गो रेफे परे लुप्यते उपधा च दीर्घमापद्यते। ब्रह्मनोरुद्वे। जटायामुदाहरणम्। अन्नाद्रकसः। नीरजारश्मि। रुद्रौद्रः। पतूरायः॥ रेफः स्वरघो। १३। भाव्युपधो रिफितस्य विसर्गः स्वरे परे विसञ्ज्ञके च परे रेफमापद्यते। दृशिन्नाकमारोत्। वायुरनिलम्। अग्निर्मूर्द्धा। त्वष्टीमानः। अहर्जिन्व। “अहरसकारपर” इत्युक्तत्वात्। शुद्धाय गन्धोऽस्य। स्वर्द्यौरिव। “पदादिर्यादिजित्पर” इत्युक्तत्वात्। स्वर्ब्वीय। “अनर्ध” इत्युक्तत्वात्तत्र चात्रापि च। “अजितपरत्वा”त्मारुस्य

रितम् । ५ । अयं भावः । लघौ अनुस्वारे गुरौ अनुस्वारे च तर्जन्याः पृष्ठमङ्गुष्ठाग्रेण नामितं कार्यम् । इत्यनुस्वारे अङ्गुलिक्षेपइति सामान्येनोक्त्वा, अङ्गुष्ठाकुञ्चनं लघावनुस्वारे त्वपाणिरङ्गम् । दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्तितः । ६ । इत्यनया दीर्घेऽनुस्वारे रङ्गे च तर्जन्याः प्रसारणं तदन्ये ह्रस्वे गुरौ चानुस्वारेऽङ्गुष्ठाकुञ्चनमिति, भगवता याज्ञवल्क्येन प्रतिपादितेन शास्त्रेणाप्यविरुद्धं भाति । तर्जन्याकुञ्चनं तु बाध्याभावाद्विशेषविहितत्वाच्च भवति । अत एव विद्वांसोऽपि दीर्घेऽनुस्वारे तर्जन्याः प्रसारणम् । लघौ गुरौ चानुस्वारे तर्जन्यामङ्गुष्ठं नामयति ॥ स्पर्शे परपञ्चमम् । ३ । मकारः स्पर्शे परस्य पञ्चममापद्यते । हिङ्कारोऽग्निः । अहङ्कारामि । इत्युक्तिरित्यत्यादावुदाहरणं बोध्यम् ॥ परसवर्णेत्यप्रकृत्या । ४ । परस्य वर्णस्य किञ्चिदन्तस्थ उच्चारणीयम् ॥ अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् ५ । अन्तस्थामन्तस्थासु परासु परेण समानस्थानामनुनासिकामन्तस्थामापद्यते । तँय्यज्ञम् । सँव्वपामि । तँल्लोकम् ॥ तकारो ले लम् । ६ । तकारो लकारे लकारमापद्यते । असौल्लोकम् । परिचिल्लोकाम् ॥ नुश्चानुनासिकम् । ७ । नकारो लकारे परे अनुनासिकं लकारमापद्यते । यस्मिंल्लोके । भीँल्लोकान् ।

त्विषा । इषाᳪ रयीणाम् । ह्रस्वात्परो दीर्घो यथा त्रि-र्ठ᳘ंश्रद्धाम । सर्वᳪ᳘ं षडिति । भूयासᳪ᳘ं सुगृहप-तिः । सᳪ᳘ं रायस्पोषेण । गुरौ परे गुरुर्यथा । भेष-जᳪ स्थिया । दᳪष्ट्राभ्याम् । सोमानᳪ स्वरणम् । त्वि-ᳪह्यसि । ऋकारसंयोगे परे दीर्घ एव भवति न तु गुरुः । उक्तं च कात्यायनशिक्षायाम् । अनुस्वारस्य ᳪ᳘ं-कार आदेशश्छन्दसि स्मृतः । ऊष्मरेफेषु परतस्तस्य वैविध्यमुच्यते । १ । ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वो गुरौ च परतो गुरुः । ऋकारपर ऊष्मान्तो दीर्घाद्दी-र्घोऽपि जायते । २ । तथा चामोघनन्दिनीशिक्षायाम् । अनुस्वारो द्विमात्रः स्यात्वर्णव्यञ्जनोदये । ह्रस्वाद्वा यदि वा दीर्घाद्द्वेयानाᳪ᳘ं हृदये यथा । ३ । सᳪ᳘ंस्पृष्ट-जित्सᳪ᳘ंस्पृष्टां संयोगे ह्रस्व इष्यते ॥ इत्यनुस्वारवि-षयः । अथानुस्वारेऽङ्गुलिप्रदर्शनविचारः । तथा च मल्लकविकृतसर्वसङ्ग्रहस्वरप्रक्रियाग्रन्थे । दीर्घे तु देशिनी त्याज्या क्षिप्रं स्याद्द्विलके लघौ । ४ । अस्या-र्थः । अनुस्वारप्रकरणस्यत्वाद्दीर्घे अनुस्वारे देशिनी प्रदेशिनी त्याज्या निष्कास्या । द्विलके गुरौ लघौ ह्र-स्वे च अनुस्वारे क्षिप्रं स्यात् । क्षिप्रं नाम अग्निम-कारिकायामेवोक्तम् । तर्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चा-प्यनामितम् । तं क्षिप्रं हि विजानीयात्स्वरविद्भिरुदी-

कारः । एते प्रकाराः यज्ञाल्कीयेषु सर्वत्र । उदात्तात्परे विसर्गे तर्जन्याः प्रसारणम् । अनुदात्तात्प्रचयाच्च परे कनिष्ठिकायाः प्रसारणम् । ह्रस्वात्स्वरितात्परे चोभयोस्तर्जन्यकनिष्ठिकयोः प्रसारणम् । दीर्घात्स्वरितात्परे विसर्गे कनिष्ठिकायाः क्षेपः । वकारयुक्ताद्दीर्घादपि परे चोभयोः । यकारयुक्ताज्जात्यस्वरिताद्दीर्घादप्युभयोः । इत्यङ्गुलिप्रदर्शनीयविषया निरूपिताः ॥ अनुस्वारविषयो व्याख्यायते ॥ अनुस्वारꣳ रोष्मसु मकारः । १ । मकारोऽनुस्वारमापद्यते रेफसहितोष्मपरेषु । यथा अपाम् रसेन । अपाꣳरसेन । त्वाम् । अश्वन्तः । त्वाꣳअश्वन्तः । देवम् सवितारम् । देवꣳ सवितारम् । उरुम् हि । उरुꣳ हि । तथा च प्रतिज्ञासूत्रे । अनुस्वारस्य ꣳमित्यादेशः शषसहरेफेषु, तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः । अनुस्वारस्य स्थानेꣳ इत्यादेशो भवति शषसहरेफेषु परेष्विति शेषः । यथा चिꣳशत् । हवीꣳषि । पयाꣳसि । दृꣳहस्व । सꣳरायः । ह्रस्वादक्षरात्परो दीर्घः । गुरौ परे नाम संयुक्ताक्षरे परे गुरुर्भवति । क्रमेणोदाहरणानि । दीर्घात्पराद्ध्रस्वो यथा । पृथिव्याꣳ शतेन । यजूꣳषि । सह्वाꣳसम् । अङ्क्ताꣳ ह-

षसहरेफेषु"। तेषामनुस्वारादीनामङ्गुलिभिः प्रकारो दर्शितवान्याज्ञवल्क्यः। मुष्ट्याकृतिर्मकारे तु नकारे तु नखग्रहः। ककारान्ते टकारान्ते ङणेऽथे ऽङ्गुलिनामनम् । १ । पञ्चाङ्गुल्यं पकारे तु तकारे कुण्डलाकृतिः। ऊर्द्ध्वं क्षेपाच्च योऽस्मात्स्यादधः क्षेपाच्च यो भवेत् । २ । एकैकामुत्क्षिपेद्धोरः स्वरिते तूभयं क्षिपेत् । स्वरितं यद्भवेत्किञ्चित्तत्रकारात्मकं ततः । दीर्घं वा यदि वा ह्रस्वं निक्षिपेदुभयोरपि ॥ ३ ॥ जात्ये च स्वरिते चैव यकारो दृश्यते यदि॥ कर्त्तव्यस्तूभयोः क्षेपो व्यायव्यैरिति दर्शनम् ॥ ४ ॥ तथा च लघुमाध्यन्दिनीयशिक्षायाम् । कनिष्ठामोचनं कुर्य्यान्नीचे च प्रचये सति । नमः कृष्णाय प्रथमो द्वितीयो जाग्रतस्तथा । १ । तर्जनीमोचनं कुर्यादुदात्ते तु विसर्गके। देवो धर्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपेत् । २ । अश्वो मर्त्यो भवेद्दृष्टं स्वारे दीर्घे कनिष्ठिकाम् । उभयोरपि ह्रस्वे च वकारे स्वरिते सति । ३ । दीर्घेऽपि चोभयोः क्षेपइति शास्त्रव्यवस्थितिः । अस्यार्थः । मकारे मुष्टिः । नकारे अङ्गुष्ठेन तर्जनीनखग्रहणम् । ककारे टकारे ङकारे, णकारे पदपाठे इषत्वस्थित्यादौ च तर्जनीमध्ये नामयेत्। पकारे पञ्चाङ्गुलिमेलनम् । तकारे कुण्डला-

द्यते । अनुनासिका चोपधा । शतॄँ १ ॥ रप । परिधीँ १ ॥ रपोणु । क्रतूँ १ ॥ रनु ॥ एते ह्येकाद्वमात्रिका भवन्तीति पाराशरेणोक्तम् ॥ आकारोपधो यकारम् । १२ । आकारोपधो नकारो यकारमापद्यते स्वरे परे अनुनासिका चोपधा । याँ २ ॥ ऽआवहः । अत्र यवयोरित्यनेन लोपेऽपि "न परकालः पूर्वकाले पुन"-रित्यनेन तस्यासिद्धत्वान्नकारस्थानस्थत्वाच्चानुनासिकवर्ज्जनं न भवति ॥ स्पर्शोऽपञ्चमः स्वरघौ तृतीयम् । १३ । प्रतिवर्गमाद्याः स्वरे घिसञ्ज्ञके च परे वर्गतृतीयमापद्यन्ते । ऋग्भगित्या । रेडसि । तदिदासम् । सङ्क्रमोदाहरणं । अनुष्टुवेवः । ऊर्गसि । राडयन्ती । तस्माद्यज्ञात् । त्रिष्टुब्जगती । अपञ्चमः किम् । युङ्ङसि । अस्मिन्यज्ञे ॥ पञ्चमे पञ्चमम् । १४ । अपञ्चमः स्पर्शः पञ्चमे स्पर्शे परे पञ्चममापद्यते । वाङ्मात्या । व्याङ्नात्या । युन्मे च्छिद्रम् ॥ हश्च तस्मात्पूर्वं चतुर्थम् । १५ । अपञ्चमात्परो हकारः पूर्वस्य चतुर्थमापद्यते चात्पूर्वस्तृतीयम् । वाग्घ्नः । समस्तुस्वोद्दृदः । अवाड्ढव्यानि । अपञ्चमात्किम् । जीमूतान्हृदयौपशेन ॥ "अनुस्वारं ठं° रोष्मासु मकारः । १६ । मकारो रेफे ऊष्मसु च परेष्वनुस्वारमापद्यते । "अनुस्वारस्य ठं°मित्यादेशः श-

ष्ट्वयतु ॥ शकारे ॥ २ ॥ शकारे च परे तवर्गश्चवर्गमापद्यते । अदिद्याञ्छस्रुभिः ॥ परस्यास्पर्शपरञ्छम् ॥ ३ ॥ तवर्गात्परः शकारश्छकारमापद्यते स्पर्शपरो न चेत् । घात्पूर्वश्चवर्गम् । यच्छूद्रे । कुष्माञ्छकपिण्डैः । अस्पर्शपरः किम् । पूर्वसूत्रोदाहरणं बोध्यम् ॥ नुः । ४ । अधिकारोऽयम् ॥ अनुनासिकमुपधा । ५ । अयमपि तथा ॥ चछयोः शम् । ६ । चकारे छकारे च परे नकारः शकारमापद्यते । उपधा चानुनासिकम् । ताँश्चक्रे । जटायां अवँश्छन्ति ॥ तथयोः सम् । ७ । तकारे थकारे च परे नकारः सकारमापद्यते । उपधा चानुनासिकम् अश्माँस्ते । पक्ष्मँस्तान् ॥ दधन्वास्वरान्यकारे लोपम् । ८ । अनयोर्नकारो यकारे परे लोपमापद्यते । नाचानुनासिकोपधा । उक्तं च वसिष्ठशिक्षायाम् । स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वदा । वर्जयित्वा तमाकारं यत्र लोपो विधीयते । दधन्वा यः । स्ववायातु ॥ रयिष्टधे च । ९ । रयिष्टधे परे नकारो लोपमापद्यते । पीवोऽअन्नारयिष्टधः ॥ नृन्पकारे विसर्जनीयम् । १० । न्टनित्ययं नकारः पकारे परे विसर्जनीयमापद्यते । अनुनासिका चोपधा । न्हँःऽ पाहि ॥ गत्नून्परिधीन्क्रातून्वनस्पतीन्स्वरे रेफम् । ११ । एतेषां नकारः स्वरे परे रेफमाप-

ऽह्वम् । ध्रुवाऽअसदन् । ऊतीऽअश्याम । सदनाऽअक-र्म होताराऽऊर्ध्वम् । ज्याऽइयम् । स्वधाऽअवस्तात् । पृथिवीऽउत द्यौः । प्रतिमाऽअस्ति ॥ प्रगृह्यं ए स्वरे ॥ १८ ॥ प्रगृह्यसञ्ज्ञकं पदं स्वरे परे प्रकृत्या भवति । इन्द्राग्नीऽ अपात् । इन्द्रवायूऽ इमे । श्रिये-ऽअवेपयः । अस्मेऽआरात् । त्वेऽइषः । अमीऽअ-न्यः ॥ उकारोऽपृक्तोऽस्पर्शात् ॥ १९ ॥ पूर्वेण भावे नियमार्थं वचनम् । अपृक्तउकारः स्पर्शात्परत्वाभाव एव प्रकृत्या । एतवाऽउऽअग्नि । अस्पर्शात्किम् । त-द्वन्तिके । सम्वतद्धामि ॥ न रोदसीमे ॥ २० ॥ रोदसी इत्येतद्द्विवचनान्तं पदमपि प्रकृत्या न भव-ति इमे शब्दे परे । रोदसी मे खये ॥ इत्यष्टौ स्वराः सोदाहरणा व्याख्याताः। अथाङ्गुलिभिः प्रदर्शनीयवि-षया व्याख्यायन्ते । तत्र व्यञ्जनानामिमे धर्माः सन्ति श्रोतस्मात्कारणादादौ व्यञ्जनसन्धिरुच्यते । तकारव-र्गश्चकारवर्गे चकारवर्गम् । १ । तकारादयः पञ्च च-कारादि पञ्चान्यतमे वर्णे परे चकारादीन्यापद्यन्ते । अत्र स्थान्यादेशयो र्यथासङ्ख्यम् निमित्तकार्यिणोस्तु न "शकारे चे"त्यस्याप्येतत्। सूत्रशेषत्वेन निमित्तानां षट्त्वात् । योगविभागस्तु तावत एवोत्तरसूत्रेऽनुवृ-त्त्यर्थः । यच्चाहम् । आच्छच्छन्दः । दनूज्जेयम् । यन्नू-

न्विकार्यं न भवति ॥ आरम्टकारोऽष्टतात् । १३ । अष्टतात्परऋटकारः पूर्वस्य एकमात्रमापद्यते । करत्य ऋटकार इत्यस्यापवादः । यस्यावश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स तस्यापवादः, यथा स्वपनमात्यैं ॥ एदोद्भ्यां पूर्वमकारः । १४ । एदोद्भ्यां परो अकारः पूर्वस्य एकमेकारं ओकारं वाऽऽपद्यते । एतत्प्रकरणे यानि विसर्गान्तानि पदानि तेषां "सर्वो अकार ओकार" इत्यनुवर्त्तमाने "अकारे चे"ति वक्ष्यमाणसूत्रद्वयेन च ओकारान्तत्वम् । उदाहरणं यथा अग्नयेऽनीकवते । अग्नेर्व्वायोऽभीतम ॥ प्रकृतिभाव ऋक्षु । १५ । ऋक्षु नियताक्षरच्छंदस्सु मन्त्रेषु एदोद्भ्यां परो अकारः प्रकृत्या भवति । एदोद्भ्यामित्यस्यापवादः । यथा गर्भेऽअन्तः । व्वायोऽ अस्मिन् ॥ यजुष्षु च । १६ । अनियताक्षरेषु अविशेषेण एकारौकाराभ्यां परः अकारः पूर्वस्य एकारमोकारं वाऽऽपद्यते । यथा अग्नेपुवोऽग्ने । च मेऽपानः । चकाराद्दृचपि क्वचित् । योऽसावादित्ये पुरुषः सोऽसावहम् ॥ का अभ्रवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिसेमसदन्नध्यामाकर्मोर्द्धिमियमवस्तादुतालिषु ॥ १७ ॥ कादीनि नव पदानि यथासङ्ख्यं इमादिषु नवसु परेषु प्रकृत्या भवन्ति । का-

स्वम् । ७ । कण्ठ्य स्वर ऋकारे परे ह्रस्वं स्वरमापद्यते । त्वऽऋभ्मते ॥ सिर्ठ० सवर्णे दीर्घम् । ८ । सिसृकञ्ज्ञकः स्वरः सवर्णे परे पूर्वः परश्च एकं दीर्घमापद्यते । यथा नारातये । स्वाहाग्नये । यौमीदम् । पचन्तूषे । अत्र स्वरे भाव्यन्तस्थामिति प्राप्ते विप्रतिषेधइत्यनेन परत्वादिदमेव भवति ॥ कण्ठ्याद्दिवर्णऽएकारम् । ९ । कण्ठ्यात्परइवर्णपूर्वः परश्चैकारमापद्यते । नयेन्द्राय । एदम् ॥ उवर्ण ओकारम् । १० । कण्ठ्यात्परउवर्णः पूर्वश्च एकमोकारमापद्यते । इहोर्ज्जम् । प्रोहामि ॥ सन्ध्यक्षरमैकारौकारौ । ११ । कण्ठ्यात्स्वरात्परं सन्ध्यक्षरपूर्वं एतौ ऐकारौकारौ आपद्येते । यथा भ्राजायैष ते । इन्द्रेणैन्द्रम् । ओजिष्ठौजिष्ठः । प्रौक्षन् ॥ रुसुद्रस्वेमँस्त्वेमँस्त्वोझन्निति च । एते निपात्यन्ते । अन्यथा प्राप्तस्य अन्यथोच्चारणं निपातनम् । यथा अपां पृष्ठे समुद्रस्येनन् । अपान्त्वेमन् । अपान्त्वोझन् ॥ नपरकालः पूर्वकाले पुनः । १२ । जातः परकालो विधिः पूर्वकाले विधौ प्राप्ते सत्यसिद्धः स्यात् । तऽइह श्रुवन्तु । पादाऽउच्यते । अराध्याऽएदिधिषुःपतिम् । राज्ञ्याऽ ऋचः । अत्र यवयोः पदान्तयोरित्यस्य परकालत्वात्तस्मिञ्जाते पूर्वकालं यथायथं प्राप्तं स-

स्वरविधायकं शास्त्रम् ॥ अथ स्वरसन्धिरभिधीयते ॥ सर्ठ॰ हितायाम् । १ । अधिकारोऽयम् । पदान्तपदाद्योः सन्धिः । २ । यदत्र सन्धिकार्य्यमुच्यते तत्पदान्तपदाद्योः स्यात् ॥ स्वरे भाव्यन्तस्थाम् । ३ । अकारण्यो भावी । इत्यनेन सूत्रेण भावीसञ्ज्ञोक्ता । ते भावीसञ्ज्ञका इ उ ऋ ऌ स्वराः स्वरे परे अन्तस्था यवरलाः क्रमश आपद्यन्ते । उदाहरणं यथा पुनाम्यच्छिद्रेण । व्याऽज्यर्व्वी । वेत्त्वाज्यस्य । विभूर्म्मीत्रा प्रभूः पित्रा । ऌकारोदाहरणं नास्ति संहितायाम् ॥ सन्ध्यक्षरमयवायावम् । ४ । सन्ध्यक्षरसञ्ज्ञकाः स्वरा एओ ऐऔ स्वरे परे अय् अव् आय् आव् एतानादेशानापद्यते । यथा इहऽएहि । अयादेशे कृते "यवयोः पदान्तयोः स्वरमध्ये लोपः । ५ । द्वयोः स्वरयोर्मध्ये विद्यमानयोः पदान्तयोर्य्यकारवकारयोर्लोपः स्यात् । सरस्वत्याऽइन्द्राय । विष्णो एते इति स्थिते अवादेशे कृते लोपे च पूर्वसूत्रेण प्राप्तेऽग्रिमसूत्रेण निषेधः कृतः ॥ न वकारस्यासस्थान एकेषाम् । ६ । स्वरयोर्म्मध्ये विद्यमानस्य वकारस्य पदान्तस्य लोपो न स्याद्भिन्नस्थाने स्वरे परे, यथा विष्णवेते । आनन्दनन्दावाण्डौ । असस्थानइति किम् । विष्णाऽउरुगाय । ऊरू पादाऽउच्येते ॥ करण्याऽऋकारे क्ष-

स्वराः सोदाहरणा व्याख्याताः ॥ ऋजुं निहत्य प्रणि-
हन्यतऽउदात्ते ॥ १७ ॥ ऋजुं स्वरितस्वरं निहत्य ह-
स्तमनुदात्तवत् । ततो ऽत्यन्तं निहन्न्यते नीची क्रि-
यते जात्याभिनिहितक्षैप्रप्रश्लिष्टा उदात्ते परभूते ।
यथा स्वः- द्यौरिव । स्वर्द्यौरिव । प्रसवे अश्विनोः ।
प्रसवेऽश्विनोः । नि अत्रिणम् । न्यत्त्रिणम् । स्रुचि
इव । स्रुचीवेति । उदात्त इति कस्मात् । धान्न्यम-
सि । वैष्णव्यौ । प्रचयस्वरलक्षणमाह । स्वरितात्परम-
नुदात्तमुदात्तमयमेकमनेकं वा ॥ १८ ॥ स्वरितात्परम-
नुदात्तमेकमनेकं वाऽक्षरमुदात्तवत् । एकश्रुत्या उच्चा-
रणीयं स्यात् । अयमेव प्रचयः प्रचितः प्रचो निचित
उदात्तमयइति वैदिकैर्व्यवह्रियते । हस्तं तु नासिकाग्र-
सम्मितं कृत्वा प्रदर्शनीयः । प्रचयन्नासिकाग्रतइति-
याज्ञवल्क्यशिक्षावाक्यात् । यज्ञपतिः । अद्यऽऋषऽआर्षे-
यः ॥ नोदात्तस्वरितोदयम् ॥ २० ॥ स्वरितात्परमनु-
दात्तं उदात्ते स्वरिते वा परे प्रचयं न स्यात् । दर्ठ०
हस्व मा । तनच्मि व्विष्णो । सादन्न्यँव्विदत्थ्यम् ॥
उदात्तवानुदात्तः । स्वरितवान्स्वरितः । यत्र स्व-
रद्वयस्य प्राप्तौ सत्यां विप्रतिषेधऽउत्तरम्बलव-
द्भवति । यथा स्रनवेऽग्ने । अद्द्यूत्येऽवसे ॥

दुदात्तो यद्यवग्रहः ॥ २० ॥ विवृत्तिलक्षणः पादवृत्तः ॥ १५ ॥ स्वरयोरन्तरं विवृत्तिरुच्यते । तया लक्ष्यतइति विवृत्तिलक्षणः स पादवृत्तसञ्ज्ञो भवति । विवृत्त्या व्यवहित इत्यर्थः । यथा ध्रुवा असदन् । ध्रुवाऽअसदन् । का ईम् । काऽईम् । तथा च याज्ञवल्क्यः । स्वरे च स्वरिते चैव विवृत्तिर्दृश्यते यदि ॥ पादवृत्तो भवेत्स्वारः श्विवऽआदित्येति निदर्शनम् ॥ २१ ॥ स्वरयोरन्तरे काले विवृत्तिर्यत्र दृश्यते ॥ स स्वारः पादवृत्तः स्यात्काऽईमिति निदर्शनम् ॥ २२ ॥ उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः ॥ १६ ॥ उदात्तादिरुदातान्तो नीचावग्रहस्ताथाभाव्यसञ्ज्ञकः स्वरो भवति । यथा तनूनप्त्रऽइति तनू । नप्त्रे । तनूनपादिति तनू । नपात् । तथा च याज्ञवल्क्यः । उदात्तोच्चरयोर्मध्ये भवेन्नीचस्त्ववग्रहः ॥ ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥ २३ ॥ केषांचिन्मते नाष्टमस्तु ताथाभाव्यः, कम्परूपस्य ताथाभाव्यस्य वाजसनेयिनां संहितापाठे निराकृतत्वात् । उक्तं च माध्यन्दिनशिक्षायाम् । औज्जिहायनकैर्माध्यन्दिनमतानुसारिभिः । अवग्रहोयदा नीचउच्चयोर्मध्यतः क्वचित् ॥ २४ ॥ ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥ पदपाठे भवत्येव कम्पो नाम स्वरस्तथा ॥ २५ ॥ इत्यष्टौ

नृ । व्वाउज्यर्व्वनृ । नु इन्द्र । न्विन्द्र । इ अन्नः । इन्न-
न्नः । तथा च याज्ञवल्क्यः । इउवर्णौ यदोदात्तावा
पद्येते यवौ क्वचित् ॥ अनुदात्ते परे नित्यं विद्यात्क्षै-
प्रस्य लक्षणम् ॥ १७ ॥ इवर्णऽउभयतो ह्रस्वः प्रश्लि-
ष्टः ॥ १२ ॥ ह्रस्वइकार उदात्तः परश्च ह्रस्वइकारो-
ऽनुदात्तस्तयोः परस्परप्रश्लिष्टे प्रश्लिष्टस्वरो भवति ।
यथा अभि इन्धताम् । अभीन्धताम् । स्रुचीव । तथा
च याज्ञवल्क्यः । इकारो दृश्यते यत्र इकारेणैव सँ-
य्युतः ॥ उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः ॥
१८ ॥ स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः ॥ १३ ॥ उदा-
त्तात्पूर्वस्मात्परो यः स्वरो व्यञ्जनयुतः स तैरोव्यञ्जन-
सञ्ज्ञकः स्वरो भवति । यथा इडे । रन्ते । तथा च
याज्ञवल्क्यः । उदात्तपूर्वँ यत्किञ्चिद्व्यञ्जनेन च सँय्यु-
तः ॥ एष सर्वबहुस्वारस्तैरोव्यञ्जनसञ्ज्ञकः ॥ १९ ॥
उदवग्रहस्तैरोविरामः ॥ १४ ॥ उदात्तावग्रहस्तैरोवि-
रामसञ्ज्ञकः स्यात् । अयं च समस्तपदेषु भवति ।
अवग्रहवचनात् । अवग्रहाभावे तु तैरोव्यञ्जन एव ।
यथा गोपताविति गो । पतौ । यज्ञपतिमितियु-
ज्ञ । पतिम् ॥ तथा च याज्ञवल्क्यः । अवग्रहात्परो
यस्तु स्वरितः स्यादनन्तरम् ॥ तैरोविरामं तं विद्या-

शेषणम् । अपूर्वोऽपि भवति । नीचपूर्वो यथा । धान्यमसि । कन्याऽइव । अपूर्वो यथा स्वर्देवेषु । तथा च याज्ञवल्क्यः । एकपदे नीचपूर्वः सयवो जात्यदृष्यते ॥ अपूर्वोऽपि परस्तद्वद्धान्यं कन्या स्वरित्यपि ॥ १५ ॥ उदात्तादयः परे सप्त ॥ ७ ॥ उदात्तादयः परे सप्त स्वराः प्रत्येतव्याः । अभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतैरोविरामपादवृत्ततथाभाव्याः ॥ त्रयो नीचस्वरपराः ॥ ८ ॥ अभिनिहितक्षैप्रप्रश्लिष्टा नीचस्वरपराः ॥ एदोद्भ्यामकारो लुगभिनिहितः ॥ ९ ॥ एकारौकाराभ्यामुदात्ताभ्याम्परोऽकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति । यथा तेऽप्सरसाम् । तेऽवन्तु । वेदोसि । सुपोऽसि । तथा च याज्ञवल्क्यः । एओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः ॥ अकारो लुप्यते यत्र तं चाभिनिहितं विदुः ॥ १६ ॥ अस्यापवादः । न देशेऽभवति ॥ १० ॥ देशइत्ययमेकारः अभवदित्यस्याकारे लुप्तेऽप्यभिनिहितस्वरितो न भवति । यथा देशेऽभवत् ॥ युवर्णौ यवौ क्षैप्रः ॥ ११ ॥ इश्च उश्च यु युवर्णौ उदात्तौ अनुदात्ते स्वरोदयौ यकारवकाराभ्यां यथासङ्ख्येन युक्तौ यदा तदा क्षैप्रस्वरो भवति । यथा त्रिअम्बकम् । त्र्यम्बकम् । व्याजी अर्व-

अधोभागे निष्पन्नः स्वरोऽनुदात्तः स्यात् । यथा ।
आर्षेयऽऋषीणाम् । अनुदात्तप्रदेशाः । "उदात्ताच्चानु-
दात्तꣳस्वरितम् ॥ ४ ॥ उदात्तादक्षरात्परं व्यञ्जनव्य-
वहितमनुदात्तमक्षरं स्वरितं भवति । यथा स्वाहा
हिस्म । हि ष्म ॥ निहितमुदात्तस्वरितपरम् ॥ ५ ॥
अनुदात्तमापद्यते स्वरितं उदात्तपरं स्वरित परं च ।
उदात्तपरे यथा स्वाहा सोमाय । स्वर्ग्यायेति स्वः ग्या
य । प्रसवेऽश्विनोः । परमेष्ठ्यभिधीतः । सुचीवे-
ति । स्वरितपरे यथा स्वाहा स्वर्णार्कः ॥ इत्येवमाद-
यः ॥ "उभयवान्स्वरितः ॥ ६ ॥ ऊर्ध्वाधो भागे नि-
ष्पन्नः स्वरः स्वरितसञ्ज्ञः स्यात् । यथा स्वः । धान्यम-
सि ॥ अथ स्वरितस्यैवान्तर्भेदा अष्टौ स्वरा उच्यन्ते ॥
तथा च याज्ञवल्क्यः । अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव
च लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च
तथाऽपरः ॥ १३ ॥ तैरोव्यञ्जनसञ्ज्ञश्च तथा तैरोवि-
रामकः ॥ पादवृत्तो भवेत्तद्वत्ताथाभाव्य इति स्व-
राः । १४ । इति । तत्र प्रत्येकलक्षणमुच्यते । तथा
च प्रातिशाख्ये ॥ एक पदे नीचपूर्वः सयवो जात्यः ॥
एकस्मिन्पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वा सहि-
तो जात्यः स्वरः प्रत्येतव्यः । नीचपूर्व इति सम्भवहि-

मनु चिन्तयेत् । सम्यगुच्चारयेद्वर्णान्हस्तेन च मुखेन-
च ॥ ६ ॥ स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत्स्थितौ ॥
हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ॥ ७ ॥ न क-
रालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजि-
ह्वश्च न वर्णान्वक्तुमर्हति ॥ ८ ॥ चुलुन्नीका स्फुटो दण्डी
स्वस्तिको मुष्टिकाकृतिः ॥ एते वै हस्तदोषाः स्युः पर-
शुश्चेति सप्तमः ॥ ९ ॥ अथ करचालनक्रमस्तत्रैव
अङ्गुष्ठस्योत्तरे पर्व्वं तर्ज्जन्न्युपरि यद्भवेत् । प्रादेशस्य
तु यो देशस्तन्मात्रं चालयेत्करम् ॥ १० ॥ उदात्तं भ्रु-
वि पातेन प्रचयं नासिकाग्रतः । हृत्प्रदेशेऽनुदात्तं तु
तिर्य्यग्जात्यादिकाः स्वराः ॥ ११ ॥ स्वरिते त्र्यङ्गुलं
विद्यान्निपाते तु षडङ्गुलम् ॥ उत्थाने तु नवाङ्गुल्यमे-
तत्स्वारस्य लक्षणम् ॥ १२ ॥ तथा च प्रतिज्ञा सूत्रे ॥
हृद्यनुदात्तो मूद्धर्न्युदात्तः श्रुतिमूले स्वरितइति ॥
अथ स्वरविचारः । तथा चोक्तम् । स्वरउच्चः स्वरो
नीचः स्वरः स्वरित एव च ॥ स्वरप्रधानं त्रैस्वर्य्यं व्य-
ञ्जनं तेन सस्वरमिति ॥ अथोदात्तानुदात्तस्वरित-
स्वराणां लक्षणान्युच्यन्ते । तथा च प्रातिशाख्ये । उच्चैरु-
दात्तः ॥ १ ॥ ऊर्ध्वभागे निष्पन्नःस्वरउदात्तसञ्ज्ञः स्या-
त् । यथा अग्ना ३ इ । "उदात्तवानुदात्तः॥२ ॥" इत्ये-
वमादयः । उदात्तप्रदेशाः ॥ नीचैरनुदात्तः ॥ ३ ॥

# अथ प्रातिशाख्यप्रदीपशिक्षा-ऽऽरभ्यते ॥

हेरम्बं विघ्नहर्तारं प्रणमामि सरस्वतीम् ॥ ययोर्न्नमनमात्रेण विघ्नसङ्घो विनश्यति ॥ १ ॥ प्रातिशाख्यं च शिक्षाश्च सम्यगालोच्य यत्नतः ॥ वैदिकानां सुबोधाय सम्यक्पाठस्य सिद्धये ॥ २ ॥ सदाशिवतनूजेन बालकृष्णेन धीमता ॥ प्रातिशाख्यप्रदीपाख्या शिक्षा सम्यङ्निरूप्यते ॥ ३ ॥ अथ वेदाध्ययनप्रकारः । तत्र याज्ञवल्क्यः । प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ॥ सावित्रीं चानुपूर्व्येण ततो वेदान्समारभेत् ॥ १ ॥ हस्तौ तु सँय्यतौ धार्य्यौ जान्वोरुपरि संस्थितौ । गुरोरनुमतिं कृत्वा पठेन्नान्यमतिर्भवेत् ॥ २ ॥ ऊरुभागे तृतीये तु करन्न्यस्याथ दक्षिणम् ॥ प्रसन्नमानसो भूत्वा किञ्चिन्नम्रमधो मुखः ॥ ३ ॥ कूर्मोऽङ्गानीव संहृत्य हस्तदृष्टिदृढमनः ॥ स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः ॥ ४ ॥ नाभ्याहन्न्यान्न निर्हन्न्यान्न गायेन्न च कम्पयेत् ॥ यथादावुच्चरेद्वर्णांस्तथैवैतान्समापयेत् ॥ ५ ॥ निवेश्य दृष्टिं हस्ताग्रे वेदार्थ-

वे नमः कपर्द्दिने स्रुत्याय व्रात्याय पाथ्याय सप्त। ५९। अथ निरवसाने द्विर्ज्जात्यः। उशिगसि वृष्ण्याऽऊर्म्मि-उर्य्यैणुद्राय व्विलिम्पने ब्रजन्याय पञ्च। ६०। अथ निरवसाने त्रिर्ज्जात्यः। सोभ्याय कूप्याय चतुरग्नेर्भागोऽसि व्वसूनाम्भागोऽसि सिकत्याय शुष्क्याय षट्। ६१। अथ निरवसाने मध्यावसाने द्वितीयशम्माऽस्यग्ने व्वाजजिद्विभूरस्यादद्दे रावाऽसि द्विर्ज्जात्यमिन्द्राय त्त्वा बृहद्वते पञ्च। ६२। अथ चतुरवसाने ह्याद्युदात्ताः। प्रत्युष्टर्ठं० रक्षऽइन्धानात्त्वा अम्बकम्बामान्युग्मसि माऽहिर्भूर्म्मा पृदाकुरग्ने पवस्वापृश्त्रमस्य व्वाजी कनिक्रदद्देवोऽसीन्द्रस्यौजस्त्य स्वाहा रुद्रायैकादश। ६३। अथ चतुरवसाने ह्याद्यनुदात्ताः। अग्नीषोमयोरुज्जितिं द्विकम्पाः सजूर्देवेनाश्शुरर्ठं०शुष्टेऽग्नीषोमाभ्यामुत्त्वन्तँ वृषभमुत्तिष्ठन्नोजसा युवन्त्देवस्याहम्प्रथमो देवस्य त्त्वा पृथिव्याः सुपर्णोऽसि व्विराड्ज्योतिरिमर्ठं० साहस्रन्तिस्रो व्वायोः पूतः पुनन्तु मा पितरः सँव्वत्सरोऽस्यग्निमद्योभयोर्ज्जवे त्वा हिरण्मयेन पात्रेणेति द्वाविंशतिः। ६४। इति महर्षियोगियाज्ञवल्क्यकृता मनःस्वारशिक्षा समाप्ता॥

---

ब्भ्यास्त्वा षड्जात्यो मघवे त्वाऽग्नये त्वा मह्यं चतुरो जात्यः पृथिव्या: सधस्थात्त्रिष्टदसि प्रथमा द्वितीयैस्त्वारो जात्या मघवे स्वाहा शाद्दन्दद्भिन्नव । ५३ । अथात्यावसाने नकारान्ता: । मनो मे प्रथमाऽग्नयेऽनीकवते व्वसन्ताय कपिञ्जलानान्त्समुद्राय शिशुमारान्त्सोमाय हर्ठ॰सानग्नये कुटरून्त्सोमाय लवानन्न्हे पारावतान्न्वसुभ्यऽऋश्यानीशानाय परस्वते दश । ५४ । अथ निरवसाने ह्याद्युदात्ता: । नमो वऽइन्द्रश्च मरुतश्च व्विश्श्वे देवाश्चमखेऽवेष्टा दन्दशूकाद्वयमुदीचीमारोह मा च्छन्दऽएकया स्तुवतैवच्छन्दो वब्भ्लुशाय रोहिताय कृत्स्नायोष्णीषिणे व्विसृजद्भ्य: सभाभ्यो गणेभ्यस्तत्क्षेभ्योऽश्श्वेभ्यो ह्रस्वाय व्वन्याय विंशति: । ५५ । अथ निरवसाने ह्यनुदात्ता: । प्राणाय मे प्रोहयमाण: सोम: पूषा पश्चाद्द्वैणार्थ्यैतस्य प्रतीचीमारोह मूर्द्धा व्वयो नवभिरस्तुवत रश्मिना सत्याय प्रतिपदस्यग्निसद्द्य स्वपस्त्याऽअद्य द्वादश । । ५६ । अथ निरवसाने कम्प: । कृष्णोऽसि मधुमतीन्न: परमेष्ठ्यभिधीत इति त्रि: । ५७ । अथ निरवसाने कम्पो जात्य: । समुद्रोऽस्यग्निरेकाद्वरेण युवानाम्नागस्त्रि: । ५८ । अथ निरवसाने ह्येको जात्य: । व्विशश्वे देवा नवभिरस्तुवत नमो हिरण्यबाह-

मऽश्वाश्ववेऽइमा मे व्वाजस्य विन्तञ्च स्रुचश्च देवो-
ऽग्निर्य्यते स्वाहा काय द्वितीयाऽग्नये स्वाहाऽऽयु-
र्य्यज्ञेनैकस्मै रोहितो धूम्ररोहितः शुद्धवालस्तृतीयो-
क्ताः सञ्चराः सुपर्णः पार्ज्जन्यः खड्गो व्वैश्वदेवोऽग्नेः
पञ्चतिर्ब्रह्मणे ब्राह्मणं तपसे कौलालमर्म्मेभ्यो ह-
स्तिपस्वोभरसायै पौल्कसमेकत्रिंशत् । ४६ । अथान्त्या-
वसाने कम्पः । पृथिवि देवयजन्यदित्यै व्व्युन्दनम-
ग्ने वः समुद्रं इच्छ प्रथमः स्वाङ्कतोऽसि स्वर्ण चतुः
कम्पाइडस्पदे तनूनपात्सरस्वतीन्नराशर्ठ॰सन्न द्वि-
कम्रो दुरो दिशो व्वाजाय स्वाहा सोमाय कुलुङ्ग-
ऽइन्द्राग्न्योः पञ्चतिरग्नयेऽनीकवतेऽग्नये गायत्राय
नम्मीय पूँश्चलूं सुमित्रिया नोऽष्टादश । ५० । अथा-
न्त्यावसाने कम्पो जात्यः । भूताय त्वा दिविव्विष्णु-
र्द्वितीयः सिंहसि तेजोऽसि तेजो मयि धेह्याब्रह्म-
न्नश्वस्तूपरः शिल्पा व्वैश्वदेव्यऽएताऽऐन्द्राग्ना
द्वितीयः कृष्णग्रीवाऽआग्नेयः कृष्णग्रीवा दश ।
५१ । अथान्त्यावसाने द्विर्ज्जात्यः । अस्कन्नमद्याग्र-
यणोऽसीदमुत्तरादाशुक्लिष्टत्समुद्रोऽसि नभस्वान्पृ
श्निस्तिरश्चीनपृश्निस्तृतीयः कृष्णग्रीवाऽआग्नेया-
ऽअन्यवापोऽर्द्धमासानामिन्द्रस्य कक्रोडो नव । ५२ ।
अथान्त्यावसाने त्रिर्ज्जात्यः सिंहसि मित्रावरुणा-

जूर्त्तुभिरनड्वान्वयः पृथिवी छन्दोऽग्निर्देवता-ऽऽच्छन्दो विराडसि त्रयः प्राणश्च सत्यञ्च तिस्रो रयिश्च ब्रीहयश्चाग्निश्च द्वे मित्रश्च चतस्रोऽग्निर्द्वे पष्ठवाट्च विरश्मिश्वब्यान्त्वा प्रथमभग्नये स्वाहा हिङ्काराय प्राणायाद्भ्यः पृथिव्यै धूम्रान्वसन्ताय पष्ठवाहो विराजे प्रजापतये पुरुषान्मयुः प्राजापत्यः पुरुषमृगश्चन्द्रमसो मशकान्केशैर्मरुतांस्कन्धा नृत्ताय सूतमृतये स्तेनहृदयं पञ्चपञ्चाशत् । ४७ । अथान्त्यावसाने ह्युदात्तानि । एष ते रुद्रभागः स्वराडसि सपत्नहाऽग्नये त्वा गायत्रच्छन्दसँव्वसवस्त्वा ह्यवन्तु राड्वासि नृपदे वेट् प्रथमं कृष्णग्रीवाऽआग्नेयाऽउन्नतऽऋषभः कृष्णा भौमाः प्रथमद्वितीयोक्ताः सञ्चरा धूम्रा बभ्रुनीकाशाः प्राजापतये च सौरी बलाकाऽएण्यह्नो व्वर्षाहूर्ऋतूनामाखुः श्वित्रऽआदित्यानाम्पूष्णँव्वनिष्ठुना नदीभ्यः पौञ्जिष्ठं सन्धये जारमुत्सादेभ्यः कुब्जमायै दार्व्याहारमन्यवेऽयस्तापँय्यमाय यमस्वं सरोभ्यो धैवरमन्तराजाय कितवं प्रतिश्रुत्कायाऽअर्तनमग्नये पीवानमष्टाविंशतिः । ४८ । अथान्त्यावसाने ह्येको जात्यः । कुक्कुटोऽसि जनयत्यै त्वाऽग्ने व्व्रतपतऽएष ते गायत्रो ध्रुवोऽसि पृथिवीन्देवान्दिवँव्वसवस्त्वाऽदितिष्ट्वाऽयन्दक्षिणा सहस्रस्य प्रमा न-

प्रथमे द्वितीयान्तमुदात्तानि । उखाङ्कृणोतु कृतस्त्वं
द्विः । ४४ । अथ ऋवसाने ह्याद्युदात्ताः । एदन्द्या-
स्मा द्विः । ४५ । अथान्त्यावसाने त्वाद्युदात्ताः । मा
भेरग्ने दब्धायोऽन्धस्त्व स्वाहा यज्ञँ व्वरुणस्योत्तम्भनं
देवीरापः शुद्धा वोड्ढँ व्वाचन्ते द्वितीयं स्वाङ्कृतोऽसि
सोमः पवते यस्तेऽश्वसनिर्व्रेशीनान्त्वा व्वसवस्त्व-
योद्दशावरेण ये देवाऽअग्निनेत्रा व्वसवस्त्वा धूपय-
न्त्वाकूतिमग्निँव्विष्णोः क्रमोऽसि चिदसि तयाऽऽयु-
र्म्मे नवविठं०शत्या स्तुवत तन्तुना रायस्पोषेण रा-
ड्यस्यधिपत्न्यसि व्वस्तते गणेभ्यो घृणावे शम्भवाय
पर्णायौजश्च ज्येष्ठयञ्च शश्वीकवर्चांश्चा च ठवसु चै-
का च चतस्रश्च ऋविश्वेडेडितो बर्हिस्त्स्तम्भन्दाः सु-
पेशसोपे दैव्या होतारा तिस्रो देवीस्त्वतस्रोऽश्विनौ
सरस्वती चत्वार्य्यग्निः स्विष्टकृतन्त्वामद्य प्राच्यै
व्वाताय नक्षत्रेभ्यस्त्वाऽउभौ ऋवयो गायत्र्यै भूम्या-
ऽआखून्वातं प्राणेन विधृतिन्नाभ्यैषोऽस्येकाधिकः ष-
ड्द्विः । ४६ । अथान्त्यावसाने ह्याद्यनुदात्तानि । इषे
त्वाऽग्नेस्तनूरिन्द्रघोषस्त्वा रक्षोहणंव्वलगहनं रक्षो-
हणो वो मित्रस्य माऽऽत्मने मऽउर्मिकत्त्वमापये
स्वाहैष ते निरृतेऽआविर्म्मर्य्याऽऊर्द्धामारोहाग्निः
पृथुः सवित्रा प्रसवित्राऽप्रान्त्वाऽयम्पुरऽइयमुपरि स-

अथ व्यवसानान्तोदात्ताः । गन्धर्वस्त्वोपह्वताऽइडा-ग्नेर्वो भिवस्तन्नादित्यैजतु दशमास्योऽग्निः पशुरथै-तानष्टावासुते दत्वा युवाकवः स्योना पृथिव्यहानि शमेकादश । ३८ । अथ व्यवसाने नाद्यः । पुरा क्रूरस्य वेदोऽस्यापोऽअस्मानभि इयं घृतेनाक्तावुपयाम-गृहीतोऽसि ध्रुवोऽस्यस्मे वः पुरीष्योऽस्यृतꣳ सत्यम्-धुश्च शुक्रश्चैषस्याग्ने त्वन्नोऽअन्तमऽआयुर्यज्ञेन कुवि-दङ्ग प्रजापतये त्वेमा नु यथेमामधि नोऽपेतऽएक-विंशतिः । ३९ । अथ व्यवसाने द्विर्द्यः । कोऽसि महाँ२॥ऽइन्द्रो नृवदाचर्षणिप्राः सहश्च नभश्च तपश्च मश्च । ४० । अथ व्यवसाने द्वितीयाद्युदात्तानि । अदि-त्यास्त्वक्सोम राजन्निन्द्रवायूऽइमेऽइन्द्राग्नीऽआगत-सोमासश्चर्षणीधृतऽइन्द्र मरुत्वो जवो यः षोडशी सो-मोऽग्निर्ठ० होतारन्नमोऽस्तु रुद्रेभ्यो हिरण्यया देवा यदापः प्राणाय स्वाहा बृहस्पते ऽअतीन्द्र गोमन्नि-न्द्रायाह्यग्निऋषिर्गीयत्रच्छन्दः पयसो रेतो विंश-तिः । ४१ । अथ व्यवसाने तकारान्तास्त्वमग्ने व्रत-पाऽइदमापो बृहस्पतिसुतस्य विश्वकर्मन्हविषेन्द्र-स्य वज्रोऽस्यामा छन्दस्योऽत्स्वन्नाभिर्मेऽष्टौ । ४२ । अथ व्यवसाने नकारान्ताः । भद्रो मे सजोषाऽइन्द्रहरति रुद्रो भव यदा पिपेष पञ्च । ४३ । अथ व्यवसाने

ग्ने ब्रह्म व्वसुभ्यस्त्वोग्गंस्युह्विमत्यन्न्यास्मनस्ते यावा-न्तम्प्ररक्षया व्विश्वेदेवासऽआतिष्ठेन्द्रमिदुदुत्यम्प्रजाप-ते नादित्यै रास्नाऽऋचो नामाश्विनौ च्छागस्य यु-ङ्क्ष्व न्द्रसी दैव्यावद्व्ध्यूं ब्रह्मणस्पते इते इठं॰ह मा-ऽनाधृष्टा पुरस्ताद्विश्वासाम्भुवां स्वाहा प्राणेभ्यो लो-मभ्यश्चतुर्व्विंशतिः । ३४ । अथ व्यवसानाऽऽद्यनुदा-त्ताः । युष्माऽइन्द्रः सवितुस्त्वेषा तेऽग्निज्ज्योतिर्व्व-तङ्क्षणुतैन्द्रः प्राणोऽयंव्वेनो मरुत्वाँ २ ॥ ऽइन्द्र महाँ २ ॥ ऽइन्द्रो यऽओजसा व्वाचस्पतिन्भुवसदन्त्वा-ऽश्विभ्याम्पच्यस्व कुविदङ्ग व्विश्वकर्म्मा त्वा हे पर-मेष्ठी त्वा हे स्वाद्वीन्त्वेरठं॰ हविर्द्दष्टा रूपऽऋता-वानँव्वैश्वानरस्य सुमतौ व्वैश्वानरो नऽऊतयेऽग्नि-र्ऋषिर्य्यमाय त्वा समुद्राय त्वा समुद्राय त्वा ष-ड्विंशतिः । ३५ । अथ व्यवसाने कम्पः । सँव्वपाम्युप-ह्वतो द्यौः कम्पो जात्यः सरठं॰हिताऽस्याकूत्यै प्रयुजे तप्तायनी मे वृहन्नसि यवोऽसि हे माऽपः प्रपर्व्वतस्य मम्मा हिरठं॰सीद्दूर्ऽअन्तरिक्षे निषसाद महाँ २ ॥ ऽइ-न्द्रो व्वज्रहस्तो यस्ते स्तनोऽभीमं सप्तदश । ३६ । अथ व्यवसाने प्रथमाद्दीदात्तानि । आ वायो आघा ये व्विनो ग्रहाऽऊर्ज्जाहुतयो यन्ते देव्यग्निर्मूर्द्धा देतो मूत्रमग्निश्च व्वैश्वानरस्य सुमतौ नव । ३७ ।

त्वारिंशत् । ३० । अथ चतुष्पदा मध्ये नकारान्ताः । पुनर्म्मनोऽअयन्नोऽअग्निरुपावीरस्युक्ष्रामाक्रन्दद्ग्निः स्रीदत्त्वमयमग्निर्व्वीरतमो येऽग्नेष्विन्द्रन्दैवीस्त्रिधा हितमग्निरस्मि जन्मना नाना हि यमश्विना देवीद्वारोऽइन्द्रन्देवीस्तिस्रो द्वारो व्वयोधसं देवीस्तिस्रो घृतेनाञ्जन्यत्पुरुषँय्यज्ञेन यज्ञऽ० रुचँ ब्राह्ममारोदसी दिवि पृष्टोऽष्टौ व्व्यक्ख्यद्यो नः सपत्नाः षड्विंशतिः । ३१ । अथ चतुष्पदा अन्ते नकारान्ता मित्रो नो या तऽआदित्येभ्यस्त्वा चतुस्त्रिऽ० शत्तत्त्वो मा नऽइन्द्र ते युक्ताय सविता शिवो भव दृऽ०ह्स्व देवि दऽ०ह्वाभ्यां मलिम्लुनुशिक्कपावको धरुणो जज्ञे व्वातस्य जूतिं सहसा जाताँल्लोकम्पृण किऽ० स्विदनं कऽउ सो या सेनाऽइदृत्वासऽएतादृत्वासऽएतऽ० सधस्य सीसेन तन्त्रं मनसा त्वष्टादधदातऽइन्द्रो दूरात्वामग्ने वृणतेऽआजुह्वानऽईड्यो यऽइमे तेऽआचरन्ती सुपर्णँव्वस्ते नाभ्याऽआसीदाकृष्णेन प्रवाहजेऽश्मन्न्वतीरीयते शँव्वातः वक्रव्यादमग्निमेकाधिकत्रिंशत् । ३२ । अथ चतुष्पदोत्तराऽऽद्युदात्ताः । सन्त्वम्प्रत, दातत्तमि, न्नत, माह, त्वन्नो न वै त्वामि, त्तत्त्वन्नश्चित्र,माम्, प्रतद्वोचे,दम्निवत्त्वाए हि रुन्द्रेत्यष्टादश । ३३ । अथ व्यवसानाऽऽद्युदात्ताः । अ-

वा ज्योतिरसि यस्ते द्रप्सस्कन्दति कोऽदात्सोम-
स्य त्विषिरस्यग्ने बृहन्हठं॰ सः शुचिषत्सञ्ज्ञानमसि
हिरण्यगर्भः सँव्वृत्तीन्वष्टुः प्रोथदश्वः किठं॰ स्वि-
दासीद्विश्वतश्चक्षुरुत व्वाजस्य मा सोममद्भ्यः स्वा-
हा यज्ञँ व्वरुणो यद्दत्या देवम्बर्हिरिन्द्रन्देवऽइन्द्रस्तस्थौ
देवम्बर्हिर्व्वयोधसं देवो नराशठं॰सस्त्रिभिरादित्यै-
र्न्नो भारती यदक्रन्दो यमेन दत्तं हिरण्यशृङ्गो य-
ऽउपश्वासय सहस्रशीर्षा वेदाहमेतमद्या देवास्ति-
रश्चीनो व्विततोऽनाधृतमन्महे श्रवसा परं ज्यरयो-
स्तच्चतुरनेजदेकमन्यदेव चीण्यधिकचत्वारिंशत् ।
२८ । अथ चतुष्पदा अन्त्ये नकारान्ताः । ये रूपाणि
तन्वा शोचिष्ठाव रुद्रं स प्रथमऽइडेरन्ने युञ्जानः
प्रथमं हस्तऽआधाय प्रत्तँ व्वाजिन्त्सँव्वसाथासा द्वा-
ऽऽहार्षम्प्रति स्पशो यामिषुं शिवेन व्वचसा द्रापेऽअ-
न्धसो व्विश्वकर्म्मन्हविषा वस्वविज्ञाय स्थविरऽइन्द्र-
स्य वृष्णऽइन्द्रेमं पञ्चदिशो व्वयन्नाम व्वाजस्य नु
यद्दत्तँय्यच्च धाराऽइन्द्रस्य रूपमायात्विन्द्रो व्वरुणस-
स्विद्वान्कः स्वित्सूर्य्यऽएकाकी प्रथमं माता च दधि-
क्राव्णोऽग्रकारिषं पञ्चस्वन्तस्तान्पूर्व्वयाऽश्वो घृतेन
सर्व्वे निमेषा यज्ञो देवानामिन्द्रवायू सुसन्दृशन्त्वा-
ग्नीऽअपात्पितुन्त्वश्विभ्यां पिबन्त्वस्योग्रं लोहितेन च-

तं सँग्वर्च्चसा ध्रुवासि ह्यध्रुवोऽयमग्ने नयान्तस्ते समु-
द्रे तेऽग्नन्तः सरस्वत्यै वाचोऽपो देवाऽआ विश्वतः
सर्ठ० सृष्टाँवसुभिः सर्ठ० शितस्मै समुद्रे त्वा स बो-
ध्यति विश्वास्त्वसुत्तमाऽग्ने तव श्रवऽउदग्ने तिष्ठ
स्वैर्द्दैव्यां ते रुद्र शिवा तनूरघोरासौ योऽवसर्प्पति
सऽइषुहस्तैरभि गोचारयभि प्रवन्त धामन्तेऽग्निर्व्युन-
जिज्ञ परीतोषिञ्चत बर्हिषदः पितरः पयसा शुक्र-
मिन्द्रः सुत्रामोद्दयन्तनूपा भिषजेन्द्रन्दुरः कवष्यो
नाश्विना गोभिः शैशिरेण तेजोऽसि वसवस्त्वाञ्जन्तु
गायत्री त्रिष्टुप्द्यौस्ते शर्ते परेभ्यो मा त्वा तपस्पा-
हि नऽओजो न सुबर्हिषमापश्चिदातत्तऽआनो यज्ञं
चन्द्रनाऽअप्सु पञ्च नद्यस्त्वमिसा सह सोमाऽअसुर्य्या
नाम हिरण्मयेन पात्रेण पञ्च पञ्चाशत् । २६ । अथ
चतुष्पदा द्विरूपः । अपारदन्द्यौरिव भूम्ना वनेषु वि
द्वितीयस्समुद्रे ते चत्वारि । २७ । अथ चतुष्पदा
द्विजात्यः । प्रथमँगसोः पवित्रं तनूपाऽउग्ने सन्नः
सिन्धुः पवित्रे स्थ स्थिरो भवापेत वीत स रुद्रवत्क-
न्याऽइन्द्रत्तुँश्चायव्यैश्चायव्यानि वैश्वदेवी पुनत्युप-
हूताः पितरोऽह्वाव्ज्ञग्ने त्रिर्ज्जात्यो होताऽध्वर्युर्ब्रा-
ह्मणोऽस्य सोमो धेनुं त्रिरायुष्यँवर्च्चस्यं षोडश । २८ ।
अथ चतुष्पदासध्ये तकारान्ताः । अद्भुतमसि दिवो

न्दुश्चन्त्वा देव सवितरेष ते कदा चन प्रयुच्छसि प्रजापतेः प्रजाऽअभूम हिरण्यरूपाऽउषसः शश्म च परमस्याः परावतो याः सेनाऽअपो देवीर्बोधा मे पुनस्त्वा युक्ते दिवि वर्च्चो युनक्त सीरा लाङ्गलम्पवीरवदोषधयः प्रति विष्ठिताः पृथिवीँ व्याश्च ब्रह्म जज्ञानं तव भ्रमासः प्रजापतिष्ट्वाऽवोचाम कवये विश्वस्य दूतँव्येन व्वहस्यद्यवोचन्मा नो महान्तँय्या ते धामानि परमाणि व्विश्वकर्म्मा ह्युद्भ्राभञ्चाग्ने प्रेहि प्रस्तरेण परिधिना पशुभिः पशूनायन्तु नः पितरो येऽअग्निष्वात्तास्तमिन्द्रं देवं बर्हिः सरस्वती त्रिः, सठं०शितो रश्मिना भद्रं कर्णेभिर्म्मो नो मित्रो यन्नीचरां चन्द्रेणाग्नेऽति निहः स्वासस्थमिन्द्रेणानु त्वा रथो जीमूतस्येव भवति त्रिपादूर्ध्वस्तस्मात्द्यज्ञात्पुरुषेण त्रीणि शताऽऽयदिषऽइन्द्रो वृत्रव्वट्सूर्य्यस्य देवेभ्यो हि देवेन नऽएष वस्तोमो नमस्तेऽअस्तु प्रजापतिः सम्भ्रियमाणः कुर्व्वन्नेव स परि चतुष्षष्टिः । २४ । अथ चतुष्पदा कम्पो जात्यः । रूपेण वऽउपांशो व्वीर्य्येण सधमादो द्युम्निन्नोरादद्दे गायत्रेण प्रतूर्व्वन्नेहि मुञ्चन्तु माऽसम्मिन्महत्यश्विनो भेषज्येन सुभूः स्वयम्भूर्य्यहाजिनो दश । २५ । अथ चतुष्पदा कम्पमानेऽन्तकः । द्वितीयँत्रसोः पवित्रमग्नये जुष्टं गृह्णाम्यादद्देऽद्वरक-

वक्त्रादद्दृष्टषा सविता प्रथमे तद्देजत्येकोनचत्त्वारिंश-
त् । २१ । अथ चतुष्पदा प्रथमे को जात्यः पवित्रे
स्थो धान्यमसिद्द्विष्यै राऽहन्नासि भूर्भुवः स्वरयमग्निः
पुरीष्योऽस्थावो देवासस्तस्यास्ते सत्यसवसो व्विष्णोर्नु कं
प्रतद्विष्णूरजसां भागोऽसि देवीरापोऽअपान्नपात्सा-
वित्रोऽसि देवश्रुतस्त्वैनसऽइममग्नो देव पुरीष्यासोऽअ-
ग्ने त्वं पुरीष्यो मातेव पुत्रँय्यन्त्री राट्सुपर्णोऽस्यभ्यर्ष-
तेमग्नो देव पुरीष्यासोऽअग्ने त्वन्नऽआग्विनन्तेजो-
ऽग्नात्परिस्रुतोऽविन्नं मेऽएवेद्विभूर्मात्रा यकोऽसकौ
यद्विविष्यत्तव शरीरँव्वनस्पते व्वीड्वङ्गो येन द्यौरि-
न्द्राग्नीमित्रावरुणा ग्रैतु ब्रह्मणस्पतिं सुखारथिर-
श्वानिव प्रत्रो मह्रे मह्युत नऽउअग्नेशा व्वास्य शतं त्रिं-
शदुत्तरम् । २२ । अथ चतुष्पदा मध्ये जात्योऽग्ने त्वँ-
व्विष्णोरराटमिन्द्रस्य स्यूः परि वीरस्यग्नेरनीकमभि-
भूरसि युञ्जे वां सुजातो ज्योतिषा सूद्गोऽसि राडदम्यु-
रो हरिकेशः पञ्चाजुह्वाना सरस्वत्यश्विना तेजसा
सत्त्वग्नो यद्गातो देवीऽउषासा नक्तेन्द्रस्य रूपं परि-
द्यावापृथिवी विदद्द्वदी त्वन्नोऽअग्ने पयस्पयः
परिपातमिमा गिरः प्रनूनङ्क्षत्रस्य त्वा सप्तविंशं
शतिः । २३ । अथ चतुष्पदा मध्येऽन्त्यो जात्यो घृ-
ताच्यसि घृताचीस्थोऽयमिहाग्निमीमदन्त सुस-

ऽश्विनस्तदश्विना सुखर्ठ० सत्पति वन्द्रेऽस्यादश्वासि सि-
ञ्चन्ति परीडितो देवैकपासा नक्तोषासेन्द्रस्यातन्नो-
ऽश्विना भेषजं सविता वरुणस्ता भिषजा प्र वाहवा
का स्विद्द्यौरासीद्वयानान्त्वा माता चापि तेषु कोऽस्य
वेशाहस्प्रजापते न त्वदश्ववा मरुतः सञ्ज प्रजापते-
स्तपसेमा तेऽउप प्रागाच्छसनं प्राचीनर्व्वर्हिर्व्वचस्व-
तीरुर्व्विवैतावानस्य ततो व्विराडन तस्य यस्माज्जातं
सुधि युक्तश्चनोऽइडाभिरस्तो रुद्रा व्विश्वेऽग्रद्य
त्वमिन्द्र देवन्देवंऽवऽइच्छन्ति त्वा न ते दुभिरत्तभि-
र्व्वगऽरव सप्तऽस्यपयोऽपश्यद्वो प्राध्यमाय त्वा मयि त्य-
दिन्द्रमो इयमन्यद्देव शतमेकमूनमिति । २० । अथ-
चतुःपदासंधयेऽनोदात्तानि । सप्तस्त्वभागास्य येषा-
सद्येति सो पूयस्यायुपञ्जमदग्नेर्व्वसुमते रुद्रवते
मूर्द्धानन्दिवऽआक्रमस्य व्वाजिन्नुदक्रमीन्नक्तोषासा स-
मनसा यास्विष्कर्त्तारमद्वरस्य व्वितन्यन्नुरिमा रु-
द्राय व्विश्वकर्म्मा व्विमनास्त्वमिदेऽयना वेतावद्रूप-
मग्निर्व्वात्तानृतमतऽइदम्पितृभ्यस्तदस्य रूपमान्त्राणि
स्थालीर्व्वीं भूतानां समिद्धोऽअग्निरश्विना तन्नो व्वा-
तऽएकस्त्वष्टुरनाधृष्यो जातवेदा नराशंसं० सस्य
महिमानं सद्यो जातः स्वादुषर्ठ० सदः पितरस्तँव्य-
त्तनहि रूपं हिरण्यहस्तोऽअसुरः प्रन्नो मित्रोऽच-

भिरानो नियुङ्क्ष्वषेऽइन्द्रस्य होता यक्षत्तिस्रो देवीर्धि-
यो जोष्टारं स्तीर्णं बर्हिरन्तरा मित्रावरुणा नीरिख-
तेऽचा ते वक्ष्यन्ती वेवृथे तिष्ठन्नृजीते पर्य्येषो ह
देवोऽस्थाजरासऽइमान्ते विश्वे देवाः प्रवायुँ व्यस्मि-
न्नोऽषाढँव्युच्छन्प्रस्तीमश्विना प्रातर्जितम्भगमश्वा-
वतीर्गोमतीरिमज्जीवेभ्यो वहव्यपं विश्वाऽआशा
यावतो द्यावापृथिव्यग्निर्नह्ँ हृदयेन यस्मिन्त्स-
र्व्वाणि सम्भृतिञ्च विद्ययाञ्च शतमेकचत्वारिंशत् ।
१९ । अथ चतुष्पदाऽयन्त्योदात्तानि । अयन्ते देवश्रु-
तो देवेष्वच्छिन्नस्य ते स प्रथमस्ते नोऽअर्व्वन्तोऽग्नये गृ-
हपतये यस्य प्रयाणं द्यौस्ते पृष्ठन्नि होता सर्ँ सीद-
स्थापो देवीर्न्नाभा पृथिव्याऽउद्देषास्वाहू दिवस्परि
य्योणासुहारऽइडामग्ने ताऽअस्य निवेशनः सङ्गमनः
सोमराज्ञोर्व्वह्वीस्थो वो रिषत्पावकवर्णाः शुक्रवर्णऽइष्ट-
तावानस्महिपँव्या शतेन सम्यक्कस्रवन्त्वग्ने जातान्स्त-
म्पत्नीभिः सम्प्रच्यावद्वसुप परि ते धन्वनो विकिरि-
द्रद्र विलोहित यो नः पिता सूर्य्यरश्मिर्हरिकेशो
विमानऽएषः पृथिव्याऽअहं स्तर्यन्तस्ताएँ सवितुश्च-
त्तिश्च होमि घृतं मिमिक्षे विश्वेऽअद्यैमौ ते यदाकू-
तादामच्छ इगिरासन्दो रूपमाश्वावयेडाभिर्व्वस्वान्सु-
रावन्तम्बर्हिषदँव्यस्ते रसस्तर्ँ सोम पितृभिर्य्यो-

र्वऽऊर्जुषाऽओषधयः प्रति मित्रः सर्ठ॰स्यन्य सिनीवाली सुकपर्द्दोत्थाय बृहती इशानो रुक्मोऽन्तरग्ने शिवो भूत्वा विश्वा ते प्रप्रायमग्नर्ठ॰ सोऽग्ने दिवो नमः सुयाऽओषधीरश्वत्थे वो यदिमा सहस्व मे दीर्घायुस्तऽऊर्ज्जो नपाद्भूरस्यपाङ्गर्भं ध्रुवचितिर्ध्रुवयोनिः कुलायिनी घृतवती पृथिव्याः पुरीषमिन्द्राग्नीऽअव्यथमानार्ठ॰ सर्ठ॰ समित्स्रुवेच या ते रुद्र शिव परि नः शितिकण्ठा यऽएतावन्तऽउप व्वमन्ये देवा देवेषु प्राणदाऽअपानदा हविषा व्वाह्धानलऽआयजन्ताशुः शिशानो यस्य कुक्षिः प्राचीमन्वग्ने सहस्राक्षाजुह्वा नः सुप्रतीकः सिन्धोरिव प्राध्वने स नो भुवनस्य पतऽइन्द्रहंन्तो विव नऽइन्द्रो व्वेद्याव्वेदिरर्यै समानायमग्ने कव्यवाहन त्वमग्ने ये चाऽधा यथा नः सोमो राजाऽद्भ्यः चीरं कुम्भो व्वनिष्ठुराक्तमन्नुपस्थे यद्देवास्तिस्रो यत्र व्वह्म यत्रेन्द्रः समिद्धऽइन्द्रो जुषाणो वर्हिर्व्वनस्पतिरवसृष्टऽउषासा नक्तं स्तोकानामिन्दुं दैव्या होतारा भिषजा व्वसन्तेनऽऋतुना दक्षेसामगृभ्णान्नभिधाऽअसि प्रजापतये सूर्य्यस्ते चन्द्रमास्ते काऽईमजारे षडस्य होता यच्चत्प्रजापतिंव्यस्येमे यऽआत्मदास्तमीशानमदितिद्याः सुगव्यन्नोऽनुवीदैः समास्त्वा पीवोऽअन्नारयिवृधऽआपो ह यच्चित्त्वया-

न्द्रेनाभिषेणोक्ष्या समुद्द्रो ऽविधेम तऽइमञ्ं स्तनं चत्वारि शृङ्गाऽऋताषाडृतधामा षडिष्टो यज्ञऽएतञ्ज्ञा- नाथ ऽवयन्ते हविर्द्धानंय्यद्वाना: करम्भो धानानांञ् रूपं- ऽव्रतेन दीक्षाम्पितृभ्य: स्वधायिभ्योऽश्विभ्याऽचक्षु- र्ज्जिह्वा मेऽपोऽग्रद्य बृहदिन्द्राय तिस्रो देवीर्हविषा- त्रातारमिन्द्रमश्विना नमुचे,रश्विना हवि,रश्विना पि- बतां सुत्रामाणं पृथिवीन्देवीस्तिस्रो देवो देवै: स्व- गा त्वा यकासकावर्द्धमेनामूर्द्धमेनम्महानाम्म्न्यो रेव- त्यो रजता हरिणी: पृच्छामि त्वा यूपव्रस्काऽउत- निक्रमणन्निषदनममेव नोऽमुत्र भूयादध यज्ञायज्ञा वऽऊर्ज्जो नपातं जोष्ट्रीऽऊर्ज्जोऽऽहुती प्रथमा वामु- पावस्रजत्मन्या रथवाहणठं॰ हविश्चन्द्रमा मनसो- ऽहृभ्य: सम्भृत: प्रजापतिश्चरति ऽवेनस्तदिदस्मे ब्रह्म महेऽग्रग्नेर्विभ्राड्बृहदर्वाञ्चोऽग्रहृ देवासो हि घृतवती भुवनानामनड्वाऽहम्पिता नोऽसि दिविधाऽइ- मसिषे पिन्वस्व दिग्भ्य: स्वाहा व्वाचे यमाय त्रयोद- शाधिकशतमेकम् । १८ । ग्रथ चतुष्पदा मध्योदात्ता- नि । यद्ग्रामेऽवभृथ निचुम्पुण विश्वश्वो देवस्येयन्ते चिदसि मित्रो नऽइरावत्यपास्पेरुर्व्ये देवासश्चित्वन्देवा- नां समिन्द्र णो धाता राति: सुगा वो व्वयठं॰ हीन्द्र- स्य ककुभठं॰ रूपं शन्नो भवन्तु व्वाजस्येमासुदुतिष्ठो-

व्यचस्वतीः सुप्रायणाः सुपेशसा सुशिल्पे पेशस्वती
स्तिस्रः समिद्धोऽअञ्जन्द्वयोश्चोपप्रागात्परममासुष्व-
यन्तो दैव्या होतारा प्रथमा सुवाचाऽऽनो यज्ञम्भा-
रती ब्राह्मणासः पितरोऽह्विरिव भोगैः श्रीश्चतेऽग्ने
विश्वेषामदितिस्त्वष्टर्यस्य तस्मिन्नस्य वरामहानग्न-
ऽइन्द्र तमिद्यायातमुप प्रवऽइन्द्राय यज्ञायतोऽनुनो-
ऽद्य सिनीवालि पृथुष्टुकऽआरात्रि समद्धराय कल्प-
न्तान्तऽआयुष्मानग्ने परीमऽइन्द्राय त्वा घर्मीतन्मनसः
कामं त्रिंशत्यधिकमेकशतम् । १७ । अथ चतुष्पदा-
ऽऽद्युदात्तमध्येऽनुदात्तानि । अग्नेस्तनूरेतन्ते कदा
चनायसग्निरेतन्ते शिवो नाम चित्पतिर्मोऽऋतस्याम-
योः शिल्पे श्वात्राः पीताऽएषा तेऽग्न आग्निर्युञ्जते म-
नोऽग्रेणीरसि घृतङ्घृतपावानः श्वात्रास्त्थ राया
ऽवयँव्यज्ञो देवानां सुशर्म्माऽसि हरिरसि पुरुदस्मो
विश्वरूपः सत्रस्य ऽऋद्धिर्यज्ञस्य दोहो देवस्याहमेष-
स्याव्यमनाम्बृहस्पतिं सविता त्वा पुत्रमिव पितराव-
पामृष्ठं रुद्राः सठं० सृज्य देवस्त्वा घृतेन सीता शतं-
वतोऽश्वावतीॐ सोमावतीमन्याबोऽव पतन्तीरवदन्ना-
श्वयित्री बलासस्येरउज्यन्तरग्ने ध्रुवाऽस्मृचे त्वाऽऽदि-
त्ययज्ञर्भमग्निन्तमन्येऽसौ युताम्नः सहस्राणि स-
हस्रशः पावकया यो वाचस्पतिस्परो दिवा सङ्क्र-

